श्रीगुरुः शरणम् ।

श्रीगणेशाय नमः ।

# कातीयेष्टिदीपकः ।

सर्वस्फूर्तिविधातारं सर्वविघ्नविनाशनम् ।
सर्वाभीष्टप्रदातारं सद्गुरुं प्रणमाम्यहम् ॥
कर्काचार्योक्तिमाश्रित्य कातीयेष्टिप्रदीपकः ।
क्रियते पर्वतीयेन नित्यानन्देन धीमता ॥

## अथ पौर्णमासप्रयोगो लिख्यते ।

तत्र तावत् उपवसथे ( यागात्पूर्वदिवसे ) यजमानः प्रक्षालितपाणिपादो गार्हपत्यस्य पश्चादुपविश्य बद्धशिखो यज्ञोपवीत्याचम्य यज्ञनारायणं स्मृत्वा प्राणानायम्य कुशोपग्रहो देशकालौ संकीर्त्य अमुकगोत्रोऽमुकशर्माऽहं श्रीपरमेश्वरप्रीत्यर्थं दर्शपूर्णमासाभ्यां यक्ष्ये, तत्रादौ श्वः ( अद्य ) पूर्णमासेष्ट्या यक्ष्ये इति संकल्पयेत् । ( दर्शेष्टिपूर्वदिवसे तु दर्शेष्ट्या श्वो यक्ष्ये इत्येव संकल्पः )

ततः आहवनीयखरे(१) अध्वर्युणा प्रथमं पञ्च भूसंस्काराः कर्तव्याः । तद्यथा दर्भैः खरं प्राक्संस्थम् उदक्संस्थं वा त्रिः परिसमुह्य गोमयेन त्रिरुपलिप्य स्फ्येन प्रागायता उदक्संस्थाः तिस्रो रेखाः खरप्रमाणाः कृत्वा ताभ्यो रेखाभ्यः अनामिकाङ्गुष्ठेन पांसून् यथाक्रममुद्धृत्य अद्भिस्त्रिरभ्युक्षेत् । एवमेव दक्षिणाग्नेः खरे निरुक्ताः संस्काराः कार्याः ॥

---

( १ ) मेखलापरिवृतमाहवनीयस्थानमाहवनीयखरः ।

ततो गार्हपत्यादाहवनीयस्योद्धरणम् । तत्र पौर्णमासेष्ट्यर्थे(१) गार्हपत्यादाहवनीयमुद्धरिष्यामि इति पूर्वं संकल्प्य गार्हपत्यात्कर्परेण ज्वलन्तमग्निमादाय आहवनीयखरे स्थापयेत् । ततः पौर्णमासेष्ट्यर्थं गार्हपत्याद्दक्षिणाग्निमाहरिष्यामि इति संकल्प्य गार्हपत्यात्कर्परेणाग्निमादाय दक्षिणाग्निखरे स्थापयेत् ॥

अथाग्न्यन्वाधानम् । तत्र यजमानः षट् समिधो हस्ते गृहीत्वा स्फ्यं सव्यहस्ते धृत्वा आग्निमष्टाकपालेन पुरोडाशेन, (२)अग्नीषोमावन्तराऽऽज्येन उपांशु, अग्नीषोमावेकादशकपालेन पुरोडाशेन श्वोऽहं यक्ष्ये इति संकल्प्य पञ्चदशो वज्रः, व्रीहिभिर्यागः(३) समाग्नेपक्षः,वपनम्,(४)प्रथमे काले व्रतोपायनम्,अन्वाहार्यो

---

(१) दर्शप्रयोगे दर्शेष्ट्यर्थम् इत्युल्लेखः । एवमुत्तरत्रापि । यद्यपि "उद्धरेति यजमानो ब्रूयात्सायंप्रातरग्निहोत्रे" इति (का० श्रौ० अ० ४ । १३ । १) सूत्रे अग्निहोत्रग्रहणात् पौर्णमासादिषु सत्यप्युद्धरणे प्रैषो नास्तीत्यस्य सर्वसंमतत्वात् तदनुसारि उद्धरामि इति प्रतिवचनं नास्त्येव तथापि सर्वकर्मसाधारणस्य कर्मादौ क्रियमाणस्य प्रतिज्ञासंकल्पस्य करणे बाधकाभावात् देवयाज्ञिकपद्धतावुल्लेखाच्च उद्धरिष्यामीति संकल्पोल्लेखः । एवमुत्तरत्र आहरिष्यामीति बोध्यम् ।

(२) दर्शेष्टौ 'विष्णुमन्तराऽऽज्येन' इत्युल्लेखः ऐन्द्राग्नपुरोडाशयाजिनः । सान्नाय्ययाजिनस्तु 'अग्नीषोमावन्तराऽऽज्येन' इत्येव । सान्नाय्ययाजिन उपांशुयागः केषांचिन्नास्त्येव । सान्नाय्ययागस्तु सोमयाजिनो नियतः, अन्यस्य तु ऐच्छिकः । संप्रदायेतु असोमयाजिनः सान्नाय्ययागो न दृश्यते । दर्शेष्टौ सान्नाय्ययाजिनो विशेषा उपरिष्टात्प्रदर्शयिष्यन्ते । एवमुत्तरत्र 'अग्नीषोमावेकादशकपालेन पुरोडाशेन' इत्यस्य स्थाने 'इन्द्राग्नी द्वादशकपालेन पुरोडाशेन' इत्युल्लेखो दर्शेष्टौ बो[illegible]

(३) व्रीहिभिर्याग इत्युल्लेखः शारदाग्रयणानन्तरम् । वासन्ताग्रयणानन्तरं तु यवैर्याग इत्युल्लेखः ।

(४) इष्टिदिने एवान्वाधानाद्यनुष्ठाने उत्तमे काले व्रतोपायने

दक्षिणा, येकेचन वैकल्पिकपदार्थास्ते ऋत्विक्प्रत्ययेन मयाऽत्र धारिताः इत्यवधार्य—ॐममाग्ने वर्चो विहवेष्वस्तु वयं त्वेधानास्तन्वं पुषेम। मह्यं नमन्तां प्रदिशश्चतस्रस्त्वयाऽध्यक्षेण पृतना जयेम (का० श्रौ० अ० २। १। ३)-

इति मन्त्रेणाहवनीये एकां समिधमादधाति। ततस्तूष्णीं द्वितीयां समिधमादधाति। एवमेव(१) गार्हपत्ये दक्षिणाग्नौ च द्वेद्वे समिधावादधाति। सपत्नीकस्य यजमानस्य मांसमैथुनवर्जनसंकल्पः। केवलस्य यजमानस्य शिखावर्जं केशश्मश्रुवपनं नखकर्तनं च। नखकर्तनं पत्न्या अपि। मध्याह्ने पत्नीयजमानौ माषमांसक्षारलवणादि प्रातर्होष्यमाणद्रव्यं च वर्जयित्वा घृतसंयुक्तमन्नमश्नीतः न तृप्तिपर्यन्तम्। अशनानन्तरं यजमानः स्फ्यमादाय (२)गार्हपत्यदक्षिणाग्न्योरन्तरालेन गत्वा आहवनीयस्य पश्चात्समीपे पूर्वाभिमुखस्तिष्ठन् आहवनीयमीक्षमाणः अप उपस्पृश्य ॐअग्ने व्रतपते व्रतं चरिष्यामि तच्छकेयं तन्मे राध्यताम्-

इति मन्त्रेण (य० सं० अ० १।५) व्रतमुपैति। अतः प्रभृति करिष्यमाणकर्माङ्गभूतो यजमानस्य सत्यवदननियमः। रात्रौ

---

'उत्तमे काले व्रतोपायनम्' इत्येव वक्तव्यम्। एवमन्यपक्षेऽप्यूह्यम्। अनन्तरं निर्देक्ष्यमाणो व्रतग्रहणप्रकारश्च तस्मिंस्तस्मिन् पक्षे तत्र-तत्रोत्कृष्टव्यः।

(१) पूर्वोक्तमन्त्रेणैकां, तूष्णीं द्वितीयां गार्हपत्ये दक्षिणाग्नौच आदधातीत्यर्थः।

(२) "अन्तरेणापराग्नी गत्वा" इति सूत्रात्। (का० श्रौ० २। १। ११)

तस्मिन्नेव(१) विहारे स्वयमेवाग्निहोत्रहोमः । सायाशनेच्छायां सत्यां होमानन्तरमारण्यौषधीनां नीवारप्रभृतीनामन्नं वृक्षफलानि वाऽश्नीयात् । रात्रौ आहवनीयागारे गार्हपत्यागारे वा पत्नीयजमानाभ्यां खरस्थाग्न्यपेक्षया अधः आस्तृतभूमौ शयनं कर्तव्यं, न खट्वादौ । प्रातरपि तस्मिन्नेव विहारे स्वयमेवाग्निहोत्रहोमः ।

अथवा इष्टिदिने एव प्रातः अन्वाधानादिकं सर्वं कर्तव्यम्(२)। "सद्यो वा प्रातः" इति सूत्रात् ( का० श्रौ० २।१।१६ )।

ततः उदिते सूर्ये(३) ब्रह्मवरणार्थं ब्रह्मयजमानयोर्द्वे आसने विहारस्योत्तरतो दर्भैरास्तृते स्थापनीये। ब्रह्मोपवेशनार्थमाहवनीयस्य दक्षिणतः दर्भास्तृतमेकमासनम् । ब्रह्मासनतः पश्चिमे यजमानोपवेशनार्थं दर्भास्तृतं द्वितीयमासनम् । तथा अपां प्रणयनायाध्वर्योरुपवेशनार्थं गार्हपत्यस्योत्तरतः एकम् । तदर्थमेव तस्यैव उप-

---

(१) इष्ट्यर्थं गार्हपत्यादुद्धृते एवाहवनीयादौ अग्निहोत्रहोमः नतु तदर्थं पुनरुद्धरणम् । एवं प्रातरग्निहोत्रहोमार्थमपि नोद्धरणम् । "प्रतिकर्मोद्धरणमप्रसङ्गे" ( का० श्रौ० अ० १ । ३ । २७ ) इति सूत्रे अप्रसङ्गे इत्युक्त्या अन्यार्थमुद्धृतस्य समाप्तावेव तत्कर्मणः पुनरुद्धरणबोधनात् । अतः इष्ट्यर्थमुद्धृते एवाग्निहोत्रहोमः । स्वयमेवेति नियमस्तु "उपवसथे नियमः" ( का० श्रौ० ४ । १५ । ३५ ) इति सूत्रात् । अन्यदा तु "स्वयं वा जुहुयात्" इति तत्पूर्वसूत्रेण विकल्पः ।

(२) दर्शेष्टौ तु सद्योऽन्वाधानादिकं न,किंतु इष्टिपूर्वदिने एव । "पौर्णमासवदन्यदसद्यः" ( का० श्रौ० ४ । २ । ४४ ) इति सूत्रात् ।

(३) दर्शेष्टिप्रयोगे तु "उदिते सवितरि पौर्णमासस्य तन्त्रं प्रक्रामियादनुदितआमावास्यस्य" इति वचनात् अनुदिते सूर्ये एव अग्निहोत्रानन्तरं ब्रह्मवरणम् । अन्वाधानादेस्तत्र पूर्वदिने एवानुष्ठानात् ।

वेशनार्थमाहवनीयस्योत्तरतः द्वितीयम्। एवं षडासनानि अवेध-विद्धानि वारणादिकाष्ठमयानि कल्पनीयानि।

ततो ब्रह्मवरणम्। विहारस्योत्तरतः उदङ्मुखोपविष्टो यजमानः प्राङ्मुखोपविष्टं ब्रह्माणं साक्षतेन सहिरण्येन दक्षिणहस्तेन ब्रह्मणो दक्षिणं जान्वालभ्य अमुकगोत्रामुकशर्मन् (१)पौर्णमासेष्ट्याऽहं यक्ष्ये तत्र "ॐभूपते भुवनपते महतो भूतस्य पते ब्रह्माणं त्वा वृणीमहे" इत्यनेन मन्त्रेण (का० श्रौ० २।१।१७) वृणीते। ततो वृतो ब्रह्मा—

"ॐअहं भूपतिरहं भुवनपतिरहं महतो भूतस्य पतिर्भूर्भुवः स्वर्देवसवितरेतन्त्वा वृणते बृहस्पतिं ब्रह्माणं तदहं मनसे प्रब्रवीमि मनो गायत्र्यै गायत्री त्रिष्टुभे त्रिष्टुब् जगत्यै जगत्यनुष्टुभेऽनुष्टुप् प्रजापतये प्रजापतिर्विश्वेभ्योदेवेभ्यो बृहस्पतिर्देवानां ब्रह्माऽहं मनुष्याणाम्" ( का० श्रौ० २।१।१८ )

इति जपेत्। ततो यजमानः "ॐवाचस्पते यज्ञं गोपाय" (का० श्रौ० २।१।१९) इत्येवं ब्रह्माणं प्रार्थयेत् (२)। ततो ब्रह्मा 'गोपायामि' इति वदेत्। ततः ब्रह्मा वरणस्थानादुत्थाय आहवनीयात्पूर्वमार्गेण वेदेर्दक्षिणतः स्थापितं ब्रह्मासनमुपगम्य आसनात् पश्चिमोत्तरे प्राङ्मुखः स्थित्वा "ॐअहे दैधिषव्योदतस्तिष्ठान्यस्य सदने सीद योऽस्मत्पाकतरः" इति मन्त्रेण ( का० श्रौ० २।१।२१ ) ब्रह्मसदनमीक्षते। ततो ब्रह्मासनादेकं

---

( १ ) दर्शेष्टौ दर्शेष्ट्याऽहं यक्ष्ये इत्युल्लेखः।

( २ ) ज्योतिष्टोमगतदीक्षणीयादिषु आधानसंबन्धिनीषु पवमानेष्टिषु च वरणाभावेऽपि नियोगार्थत्वात् 'वाचस्पते' इति प्रैषः प्रवर्तते एवेति कर्कभाष्ये स्पष्टम्।

तृणं गृहीत्वा "ॐ निरस्तः पाप्मा सह तेन यं द्विष्मः" इति मन्त्रेण ( का० श्रौ० २।१।२२ ) नैर्ऋत्यां दिशि निरस्य अप उपस्पृश्य "ॐ इदमहं बृहस्पतेः सदसि सीदामि प्रसूतो देवेन सवित्रा तदग्नये(१) प्रब्रवीमि तद्वायवे तत्पृथिव्यै" ( का० श्रौ० २।२।१ )

इति मन्त्रेण ब्रह्मसदने आहवनीयाभिमुखः उपविशेत् । ततः ब्रह्मासनतः पश्चिमे वेदिं स्पृशन् यजमानः पूर्वकल्पिते स्वासने उपविशेत् ।

ततः अध्वर्युः गार्हपत्यस्योत्तरतः पूर्वकल्पिते आसने उपविश्य वारणकाष्ठनिर्मितं चतुष्कोणं चमसं सव्यहस्ते कृत्वा दक्षिणहस्तस्थेनोदपात्रेण स्वयं तस्मिन्नुदकमासिच्य दक्षिणहस्तेन तं गार्हपत्यस्योत्तरतो निधाय "ॐ भूतस्त्वा भूत करिष्यामि" इति मन्त्रेण ( का० श्रौ० २।३।१ ) चमसमालभेत(२) । ततः "ब्रह्मन्नपः प्रणेष्यामि" ( का० श्रौ० २।३।२ ) इति ब्रह्माणं पृच्छेत् । "यजमान वाचं यच्छ" ( का० श्रौ० २।३।२ ) इति यजमानं च प्रेषयेत् । ततः ब्रह्मा "ॐ प्रणय यज्ञं देवता वर्धय त्वं नाकस्य पृष्ठे यजमानोऽअस्तु । सप्तऋषीणाᳬ सुकृतां यत्र लोकस्तत्रेमं यज्ञं यजमानं च धेहि" ( का० श्रौ० २।२।८ ) इत्यन्तमुपांशु पठित्वा "ॐ प्रणय" इत्युच्चैः अध्वर्योरनुज्ञां दद्यात्, यथाऽध्वर्युः शृणुयात् ।

---

( १ ) सौर्यादिविकृतौ अग्निशब्दो न विपरिणंस्यते । वायुना सहोच्चारणेन प्राकृताग्निपरत्वाभावात् ।

( २ ) न तु उदकम् । पात्रस्यैव तदुपदेशात् । उदकसंस्कारस्य तद्वारैव सिद्धेः । तेन विकृतौ उदककार्यापन्नयोर्दधिपयसोर्द्वित्वेऽपि पात्रस्यैकत्वात् न मन्त्रगतत्वाशब्दस्य विपरिणामः ।

ततोऽध्वर्युः चमसं गृहीत्वा आहवनीयादुत्तरस्यां दिशि पूर्वकल्पिते आसने प्राङ्मुख उपविश्य बहिर्वेदि दर्भेषु प्रणीताचमसं "ॐकस्त्वा युनक्ति स त्वा युनक्ति कस्मै त्वा युनक्ति तस्मै त्वा युनक्ति" ( य० सं० १।६)

इति मन्त्रेण स्थापयेत्(१)। तत आहवनीयस्य पुरस्तात्प्रथमम् उदगग्रैः कुशैः स्तरित्वा, ततः दक्षिणतः प्रागग्रैः स्तरित्वा, पश्चादुगग्रैः स्तरित्वा, उत्तरतः प्रागग्रैः स्तृणुयात् । एवमेव गार्हपत्यस्य परिस्तरणं कृत्वा दक्षिणाग्नेः परिस्तरणं कार्यम् ।

ततः गार्हपत्यस्योत्तरतः प्राक्संस्थानि उदगग्राणि पात्राणि(२) द्विशः स्थापयेत् । तद्यथा–शूर्पमग्निहोत्रहवणी चेत्येकं द्विकम् । स्फ्यश्च (१९पौ., २०दर्शे ) कपालानिचेति द्वितीयम् । शम्या कृष्णाजिनंचेति तृतीयम् । उलूखलं मुसलं चेति चतुर्थम् । दृषदुपला चेति पञ्चमम् ।

एवं पञ्च युग्मानि स्थापयित्वा अर्थवन्त्यन्यान्यपि द्विशः स्थापयेत् । तद्यथा–पात्री पवित्रच्छेदनानि त्रीणि कुशतरुणानिच, द्वे पवित्रे साग्रे अनन्तर्गर्भे उपवेषश्च ( धृष्टिः ), आज्यस्थाली सोदकमुपसर्जनीपात्रंच,वेदः अन्वाहार्यपात्रंच,वेदितृणम् अभ्रिश्च, योक्त्रं स्रुवश्च, जुहूः उपभृच्च, ध्रुवा सन्नहनावच्छादनानिच, त्र-

---

( १ ) प्रणीता आपः सर्वार्था न तु संयवनमात्रार्था इति कर्कभाष्ये ( का० श्रौ० २ । ३ । ५ ) स्पष्टम् ।

( २ ) "द्विशः पात्राणि सादयति" ( २ । ३ । ६ ) इति पात्रत्वावच्छेदेन द्वन्द्वताविधानात् सर्वेषां पात्राणां द्वन्द्वरूपेण स्थापनम्, नतु शूर्पाग्निहोत्रहवण्यादीनामेव । पात्रशब्दश्च साधनमात्रार्थको, नतु खातवद्विषयः । तेन स्फ्यादीनामपि पात्रत्वमुपपद्यते । खातवन्ति च प्राग्बिलानि स्थापनीयानि । सर्वंचैतत् अस्मिन्नेव सूत्रे कर्कभाष्ये स्पष्टम् ।

यः परिधयः विधृतीच, आज्यं पुरोडाशपात्र्यौच, होतृषदनं कुशास्तीर्णं शृतावदानंच, व्रीहियवान्यतररूपम् औषधं प्राशित्रहरणंच, अन्वाहार्यतण्डुलाः अन्तर्धानकटश्च, पूर्णपात्रं कर्मापवर्गार्थं समिद्द्वयंच,(१)इध्माबर्हिषोरुपकल्पनं षडवत्तं चेति। एवं पात्राण्यासाद्य हविःसहितां स्फ्योपहितां प्रागग्राम् पात्रीं गार्हपत्यस्य पश्चाद्भागे स्थापयेत् ।

ततः "ॐकर्मणे वां वेषाय वाम्" (२)( आददे ) (य० सं० १।६) इति मन्त्रेण अध्वर्युः शूर्पमग्निहोत्रहवणीं चाददीत् । तत आरभ्य हविष्कृदाह्वानपर्यन्तमध्वर्युः न व्याहरेत् । व्याहरणे वैष्णवमन्त्रं जपेत् । ततः "ॐप्रत्युष्टꣳ रक्षः प्रत्युष्टा अरातयः" (य० सं० १।७) इति मन्त्रेण शूर्पमग्निहोत्रहवणीं च तापयेत् । ततः प्रणीतास्थोदकोपस्पर्शनम् । ततः "ॐउर्वन्तरिक्षमन्वेमि" इति मन्त्रेण पात्रीसमीपं गत्वा उपविश्य "ॐधूरसि धूर्व धूर्वन्तं धूर्व तं योऽस्मान् धूर्वति तं धूर्व यं वयं धूर्वामः"। (य० सं० १।८) "देवानामसि(३) वह्नितमꣳ सस्नितमं पप्रितमं जुष्टतमं दे-

---

(१) "इध्मं प्रोक्षति विस्रꣳस्य" इत्युपरिष्टात् (२।७।१६) प्रोक्षणविधानात् अत्रोपकल्पनमभिहितमिध्माबर्हिषोः।

(२) अयंचाध्याहारः। अस्य संहितावत्प्रयोगो न भवति, एवमनुषङ्गस्यापि इति "उत्तराघारमाघार्य पशुं पूर्वꣳ समनक्ति" (का० श्रौ० ६।४।२) इतिसूत्रस्थकर्कभाष्ये स्पष्टम्।

(३) अत्र पित्र्येष्टौ पितॄणामासि इत्यूहः। एकदेवत्याद्विदेवत्ययोः देवस्यासि देवयोरसि इत्यूहः। अदितीष्टौ देव्या असि इत्यूहः। प्रातिपदिकार्थस्य देवत्वस्य, लिङ्गस्य पुंस्त्वस्य, वचनस्य त्रित्वस्य च प्रकृतौ समवायात्। पितृषु देवत्वस्य, सौर्यादौ देवतात्रित्वस्य, अदितीष्टौ अदितेः पुंस्त्वस्य च अभावात् इति कर्कभाष्ये (का० श्रौ० २।३।१४) स्पष्टम्।

यद्रूतमम् । अह्रुतमसि हविर्धानं दृ्ंहस्व मा ह्वार्मा ते यज्ञपतिर्ह्वार्षीत्"। (य० सं० १।८-९) "विष्णुस्त्वा क्रमताम्" (य० सं० १।९) इत्येतान् त्रीन् मन्त्रान् पात्र्याः पूर्वार्धमभिमृश्य जपति । पात्र्याः पश्चात्प्राङ्मुखोपविष्टोऽध्वर्युः "ॐउरु व्वाताय" (य० सं० १।९) (भव) इति मन्त्रेण हविरीक्षते। "ॐअपहतꣳ रक्षः" (य० सं० १।९) इत्यनेनापद्रव्यं निरस्य अपद्रव्याभावे हविरभिमृश्यैव अप उपस्पृश्य "ॐ यच्छन्तां पञ्च" (य० सं० १।९) इति मन्त्रेण हविरालभेत। (हविर्भेदे भेदेनालम्भः संस्कार्यत्वात् ) ।

ततः सव्यहस्ते शूर्पं निधाय तस्योपरि अग्निहोत्रहवणीमुत्तानां निधाय प्राङ्मुख आसीनः "ॐदेवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् । अग्नये जुष्टं गृह्णामि" (य० सं० १।१०) इत्यनेन मन्त्रेण त्रिवारं (१)मुष्टिना हविरग्निहोत्रहवण्यां प्रक्षिप्य(२) चतुर्थवारं तूष्णीं प्रक्षिपेत् । ततः चतुर्गृहीतं हविः शूर्पमध्ये दक्षिणपार्श्वे प्रक्षेपणीयम् उदक्संस्थतासंपत्त्यर्थम् । ततः अग्नीषोमीयपुरोडाशार्थम् "ॐ देवस्यत्वा० हस्ताभ्याम् । अग्नीषोमाभ्यां जुष्टं गृह्णामि" इत्यनेन मन्त्रेण (य० सं० १।१०) पूर्ववत् त्रिः प्रक्षिप्य चतुर्थवारं तूष्णीं प्रक्षिप्य शूर्पमध्ये पूर्वक्षिप्तहविरुत्तरतः प्रक्षिप्य "ॐ भूताय त्वा

(१) निर्वापस्य समाख्यया अध्वर्युकर्तृकत्वात् मुष्टिरध्वर्योरेव बोध्यः, नतु याजमानः । पदार्थप्राधान्यात् । यजमानपरिमाणं तु "पञ्चारत्निं परिवासयेत्" इत्यादौ ग्राह्यम् ।

(२) "अग्निहोत्रहवण्यां चतुरो मुष्टीन्निर्वपति" इत्यनेन वचनेन निर्वापस्यैव प्राधान्येन विधानात् ग्रहणस्य तदर्थत्वाच्च प्रक्षेप एव मन्त्रप्रयोगः ।

नारातये"(परिशेषयामि)(१) इति मन्त्रेण(य० सं० १।११)पाञ्यां परिशिष्टं हविरभिमृशेत्। ततः "ॐ स्वरभिविख्येषम्" इति मन्त्रेण (य०सं०१।११)प्राचीमीक्षेत। ततः "ॐ दृꣳहन्तां दुर्य्याः पृथिव्याम्" इति मन्त्रेण ( य० सं० १।११ ) तत उत्थाय "ॐ उर्वन्तरिक्षमन्वेमि" इति मन्त्रेण (य० सं० १।११) गार्हपत्यस्य उत्तरतो गत्वा गार्हपत्यस्य पश्चाच्छूर्पे गृहीतं हविः "ॐ पृथिव्यास्त्वा नाभौ सादयाम्यदित्या उपस्थेऽग्ने(२) हव्यꣳ रक्ष" इति मन्त्रेण (य० सं० १।११) आसादयेत्।

ततः समप्रमाणौ अनन्तर्गर्भौ अक्षरिताग्रौ कुशौ क्षुरिकास्थानीयैः त्रिभिः कुशैः "ॐ पवित्रे स्थो वैष्णव्यौ" इति (य०सं० १।१२) मन्त्रेण(३) छिन्द्यात्। ततः अग्निहोत्रहवण्यां स्वयमेव प्रणीतातः उदकमासिच्य "ॐ सवितुर्वः प्रसव उत्पुनाम्यच्छिद्रेण पवित्रेण सूर्य्यस्य रश्मिभिः" इति मन्त्रेण (य० सं० १।१२) ताभ्यां पवित्राभ्यां ता अपः उत्क्षिपेत्, पवित्रे च तत्रै व स्थापयेत्।

ततः सव्यहस्तेऽग्निहोत्रहवणीं निधाय (४)सव्यह-

(१) 'परिशेषयामि' इत्येव मन्त्रैकवाक्यतार्हे, न तु 'अभिमृशामि' इति कर्कभाष्ये स्पष्टम्। परिशेषणं च हविष एव संस्कारः। देवदत्तस्येव देवदत्तीयपुष्पमालापनयनम्। शेषिण एव प्रयोजनवत्त्वात्।

(२) अयंच अग्निशब्दः सन्निधानात् श्रपणाग्निविषयो, न प्राकृत देवतावचनः। तेन सौर्यादिविकृतौ न विपरिणामः।

(३) पवित्रत्रित्वपक्षेऽपि द्विवचनान्तो मन्त्रः प्रवर्तते एव। प्रातिपदिकार्थस्य प्रधानस्य समवेतत्वात्।

(४) समाचारादेव दक्षिणेनादिङ्गने प्राप्ते सूत्रे दक्षिणग्रहणं सव्ये स्थितानामेव प्रोक्षणीनां दक्षिणेनोदिङ्गनं यथा स्यात् इत्येतदर्थम्। तेन सव्यस्थितानामेव उदिङ्गनं क्रियते इति बोध्यम्।

स्तस्थाऽग्निहोत्रहवणीस्थिता एव अपः दक्षिणहस्तेन "ॐ देवीरापो अग्रेगुवो अग्रेपुवोऽग्र इममद्य यज्ञन्नयताग्रे (१)यज्ञपतिर्ठ सुधातुं यज्ञपतिं देवयुवम्। युष्मा इन्द्रोऽवृणीत वृत्रतूर्ये यूयमिन्द्रमवृणीध्वं वृत्रतूर्ये" इति मन्त्रेण (य० सं० १।१२-१३) उदिङ्गयेत् (ऊर्ध्वं चालयेत्)। ततः "ॐ प्रोक्षिता स्थ" इति (य० सं० १।१३) मन्त्रेण (२)प्रणीतास्थजलेनाग्निहोत्रहवणीस्थाः अपः हस्तेन प्रोक्षेत्।

ततः "ॐ ब्रह्मन् हविः प्रोक्षिष्यामि" इति ब्रह्माणं पृच्छेत्। ततो ब्रह्मा "ॐ प्रोक्ष यज्ञं देवता वर्धय त्वम्" इत्यादि धेह्रीत्यन्तमुपांशु पठित्वा "ॐ प्रोक्ष" इत्युच्चैः अध्वर्युमभ्यनुजानीयात्। ततोऽध्वर्युः प्रोक्षण्याः सकाशादुदकं सपवित्रहस्तेनादाय "ॐ अग्नये त्वा जुष्टं प्रोक्षामि" इति मन्त्रेण (य० सं० १।१३) शूर्पस्थमाग्नेयं हविः प्रोक्ष्य "ॐ अग्नीषोमाभ्यां त्वा जुष्टं प्रोक्षामि" इति (य० सं० १।१३) मन्त्रेणाग्नीषोमीयं हविः प्रोक्षेत्। ततः विनियोगक्रमेण सर्वाणि पात्राणि (३)प्रतिपात्रं मन्त्रावृत्त्या "ॐ दैव्याय कर्मणे शुन्धध्वं देवयज्यायै यद्वोऽशुद्धाः पराजघ्नुरिदं वस्तच्छुन्धामि"

---

(१) यज्ञपतिशब्दश्च अनेकयजमानके विपरिणम्यते।

(२) "प्रोक्षिता स्थेति तासां प्रोक्षणम्" इति सूत्रकारेण स्पष्टमेव प्रोक्षणविधानात् "हविश्च" इत्युत्तरसूत्रे तदनुकर्षणाच्च मन्त्रपाठमात्रपक्षस्य सूत्रस्वरससिद्धत्वाभावात् प्रोक्षणकर्मत्वे च तासां प्रोक्षणसाधनत्वानुपपत्तेः प्रणीतानां सर्वार्थत्वात् ताभिरेव अग्निहोत्रहवणीस्थानामपां प्रोक्षणमित्यभिप्रायेण प्राणीतेन प्रोक्षणमभिहितम्।

(३) सर्वेषां संस्कार्यत्वेन प्राधान्यात् प्रतिप्रधानं गुणावृत्तिन्यायेन मन्त्रावृत्त्या पात्रप्रोक्षणं सिध्यति। मन्त्रे बहुवचनं तु पू-

इति मन्त्रेण (य० सं० १।१३) प्रोक्षेत् । आदौ स्फ्यं प्रोक्ष्य तं सव्यहस्ते कृत्वा कृष्णाजिन-उलूखल-मुसल-शम्या-दृषद्-उपल-पात्री-उपवेष-कपालाष्टक-कपालैकादशकानां प्रोक्षणं कृत्वा आज्यस्थाल्यादीनां यथासादितानां प्रोक्षणं कार्यमिति संप्रदायः । आज्यप्रोक्षणं तु स्फ्यं वर्जयित्वा कार्यमिति बोध्यम् । ततः प्रणीताहवनीयान्तराले प्रोक्षणीर्निधाय(१) तासु पवित्रे स्थापयेत् ।

ततोऽध्वर्युः "ॐ शर्मासि" इति ( य० सं० १।१४ ) मन्त्रेण (२)कृष्णाजिनं हस्तेन गृहीत्वा आसादितपात्रेभ्यः परतो गत्वा "ॐ अवधूतꣳ रक्षोऽवधूता अरातयः" इति (य० सं० १।१४)मन्त्रेण (३)सकृदवधूयोदकमुपस्पृश्य गार्हपत्यमुत्तरेण "ॐ अदित्यास्त्वगसि प्रति त्वा ऽदितिर्वेत्तु" इति मन्त्रेण ( य० सं० १।१४ ) प्रत्यग्ग्रीवं कृष्णाजिनमास्तृणीयादुपरिलोमम् । वामहस्तेन स्पृष्ट एव कृष्णाजिने दक्षिणेन हस्तेन उलूखलमाहृत्य तदुपरि "ॐ (४)अद्रिरसि

---

जार्थम् इति भावः । प्रोक्षणमन्त्रे पितृयज्ञे देवशब्दस्य स्थाने प्रधानार्थेषु शूर्पादिषु देवशब्दप्रयोगः । अङ्गप्रधानोभयार्थेषु देवापितृशब्दप्रयोगः । यत्तु तत्रापि दैवकर्मार्थमेव तत्र नोह इति विवेकः ।

( १ ) प्रोक्षणीशब्दश्च यौगिको न संस्कारनिमित्तः । "आज्यप्रोक्षणीरुद्धस्य" इत्यादौ तेन असंस्कृता एवाप आदीयन्ते ।

( २ ) कृष्णस्य मृगस्याजिनमिति षष्ठीतत्पुरुषः । "स कृष्णो भूत्वा चचार तस्य देवा अनुविद्य त्वचमेवाच्छायाजह्रुः" इति लिङ्गात् । कृष्णाजिनास्तरणं चावघातार्थम् । अतस्तदभावे तदभावः ।

( ३ ) कृष्णाजिनावधूननं च अदृष्टार्थत्वात्सकृदिति बोध्यम् ।

( ४ ) उलूखलं पाषाणसदृशदार्ढ्येन स्तोतुं तत्र अद्रिशब्दःप्रयुज्यते, नतु तस्य अश्ममयत्वम् । तत्त्वे च तस्य वानस्पत्यत्वविरोधात् ।

(१)र्व्वानस्पत्यः प्रतितत्वाऽदित्यास्त्वग् वेत्तु" इति मन्त्रेण (य० सं० १।१४) निदध्यात्। ततः शूर्पे पृथक् स्थापितं हविर्द्वयं मिश्रीकृत्य सव्यहस्तपृष्ठे उलूखले "ॐ अग्नेस्तनूरसि(२) र्व्वाचो व्विसर्जनं (३)देववीतये त्वा गृह्णामि" इति मन्त्रेण (य० सं० १।१५) शूर्पेणैव हविरावपेत्। ततः "ॐ बृहद्ग्रावासि र्व्वानस्पत्यः" इति मन्त्रेण (य० सं १।१५) मुसलं हस्तेन गृहीत्वा "ॐ स इदं (४)देवेभ्यो हविः शमीष्व सुशमि शमीष्व" इति मन्त्रेण (य० सं० १।१५) उलूखले प्रवेश्य स्वयं कण्डने प्रवृत्त एवाध्वर्युः "ॐ हविष्कृदेहि" इति मन्त्रेण (य० सं० १।१५) त्रिः पत्नीमाग्नीध्रं वा हविष्कण्डनार्थम् आह्वयति।

अत्राध्वर्युयजमानयोर्वाग्विसर्गः। अध्वर्यौ हविष्कृदेहीत्येवमाह्वयति सति आग्नीध्रः "ॐ कुक्कुटोऽसि मधुजिह्व इषमूर्जमावद त्वया र्व्वयꣳ संघातꣳ संघातं जेष्म"

---

"अभिनिहितमेव सव्येन पाणिना भवति अथ दक्षिणेनोलूखलमाहरति" इति तस्य दक्षिणेनैकेनाहार्यत्वस्य अश्ममयत्वेऽसंगतेश्चेति दिक्।

(१) नखनिर्भिन्नचरौ वानस्पत्यपदस्य स्थाने मानुष इति विपरिणामो न युक्तः। नखानामुलूखलकार्यापन्नत्वेऽपि तेषाम् उलूखलवत् कृष्णाजिने निधानाभावात्।

(२) अत्र अग्निशब्दो ज्वलनविषयः। 'यज्ञो हि तेनाग्नेस्तनूः' इतिलिङ्गघटकयज्ञशब्दलक्ष्यार्थस्य हविषो ज्वलनशरीरत्वस्यैव संभवात्। तेन शारद्वतावभृथेष्टौ अपांतनूरसि इति विपरिणामः।

(३) पितृयज्ञे च पितृवीतये इति विपरिणामः।

(४) अत्रापि देवेभ्य इत्यस्य स्थाने पितृभ्य इति पितृयज्ञे विपरिणामः। एकदेवत्ये देवायेति, अदितीष्टौ देव्यै इति विपरिणामः।

इति मन्त्रेण ( य० सं० १।१६ ) शम्यया द्विर्दृषदं मन्त्रावृत्त्या समाहत्य उपलां सकृन्मन्त्रेणानेनैव (१)समाहन्यात् ।

तदनन्तरं पत्नी आग्नीध्रो वा हविषः कण्डनं(२) कुर्यात् । वितुषीभूतेषु व्रीहिषु स एव "ॐ वर्षवृद्धमसि" इति मन्त्रेण ( य० सं० १।१६ ) हस्तेन शूर्पं गृहीत्वा "ॐ प्रति त्वा ऽवर्षवृद्धं वेत्तु" इति मन्त्रेण ( य० सं० १।१६ ) कण्डितं हविः उलूखलं तिर्यक्कृत्य शूर्पे निदध्यात् । ततः "ॐ परापूतꣳ रक्षः परापूता अरातयः" इति ( य० सं० १।१६ ) मन्त्रेण शूर्पेण निष्पूय तुषान् पृथक्कृत्य अप उपस्पृश्य "ॐ वायुर्वो विविनक्तु" (य० सं० १।१६) इति मन्त्रेण (य० सं० १।१६) काण्डितानकण्डितांश्च तण्डुलान् विविच्य ( पृथक्कृत्य ) कण्डितान्निधाय अकाण्डितान्पुनरुलूखलमध्ये प्रवेश्य कण्डनं कृत्वा पुनर्निष्कास्य शूर्पे कृत्वा तुषान्पृथक् कुर्यात् ।

(३)ततोऽध्वर्युः सर्वांस्तुषान् "ॐ अपहतꣳ रक्षः" इति मन्त्रेण ( य० सं० १।१६ ) उत्करे निरस्येत् ।

---

( १ ) समाहननं च वचनादग्नीत्कर्तृकम् । तेन अव्यापृतेऽपि अध्वर्यौ अग्नीदेव कुर्यात् । समाहननंच अदृष्टोपकारकः पदार्थः । तेन यावदुक्ते निवर्तते ।

( २ ) "खातलूनच्छिन्नावहतपिष्टदुग्धदग्धेषु यजुष्क्रिया संभवात्" इति सूत्रस्य ( का० श्रौ० १ । १० । १३ ) 'खातादिषु लोकसिद्धेषु गृहीतेष्वपि यजुर्युक्ता क्रिया पुनर्यथाकथंचित् कर्तव्या यथाकथंचिद्यजुष्क्रियायाः संभवात' इत्यर्थस्य याज्ञिकैः स्वीकारत् अद्यत्वे लोकासिद्धपिष्टोपादानेऽपि यजुषा अवघातादिक्रिया विधीयते इति बोध्यम् ।

( ३ ) अवघातस्य अग्नीत्कर्तृकत्वेऽपि तुषनिरसनस्य तच्छेषत्वाभावान्न तत्कर्तृकत्वम् । किंतु अध्वर्युकर्तृकत्वमेवोत्सर्गतः ।

ततः अपः उपस्पृश्य शूर्पस्थाँस्तण्डुलान् पात्र्यां प्रक्षिप्य अनामिकाग्रेण तान्स्पृशन् "ॐ देवो वः सविता हिरण्यपाणिः प्रतिगृभ्णात्वच्छिद्रेण पाणिना" इति (य० सं० १।१६) मन्त्रेणाभिमन्त्रयेत्(१)। ततः त्रिः कण्डनेन सूक्ष्मकणिकाभ्यो हविर्निरुप्य कण्डनं कृत्वा निष्कास्य शूर्पे निष्पूय कणान्निधाय एवमेव पुनर्वारद्वयं कुर्यात्। फलीकरणं तूष्णीं वा "ॐ देवेभ्यः शुन्धध्वम्" इति मन्त्रेण (का० श्रौ० २।४।२२) वा कार्यम्। मन्त्रपक्षे प्रतिफलीकरणं मन्त्रावृत्तिः कणनिधानं च कर्तव्यम्। कणानां "पुरोडाशकपालेन कणानपास्यति" इत्युत्तरत्र विनियोगस्य वक्ष्यमाणत्वात्।

ततः तण्डुलपेषण–कपालोपधाने सह भवतः। उभयक्रियाकर्तृत्वस्य युगपदेकत्र विरोधात्। अध्वर्युः प्राधान्यात्पेषणं करोति, अग्नीच्च कपालोपधानम्। तत्र सूत्रक्रमेण प्रथमं कपालोपधानमुच्यते। तत्र अग्नीत् प्रक्षालितानि कपालानि समादाय गार्हपत्यस्य पश्चादाग्नेयपुरोडाशसंबन्धीनि अष्टौ कपालानि दक्षिणतः प्रथमं संस्थाप्य अग्नीषोमीयपुरोडाशसंबन्धीनि एकादश कपालानि उत्तरतः संस्थाप्य गार्हपत्यस्य पश्चाद्भागे स्वय-

---

तुषनिरसनस्य श्रुतौ सूत्रे च विविक्तीकरणात्पूर्वं निर्देशेऽपि विविक्तीकरणमेव तुषनिरसनात्पूर्वं प्रतिपत्तव्यम्। अशेषतुषनिरसनस्यैवमेव सिद्धेः। तदुत्तरं विविक्तीकरणे हि पुनरपि तुषा मिश्रिता एव तिष्ठेरन्निति।

उत्करे तुषनिरसनं च प्रतिपत्तिः। अतोऽवघाताभावे तदभावः। अवघातश्च कृष्णाजिनादितुषविप्रमोकान्तः। तत्र नानाबीजेष्टयां हविरावपनादीनि मन्त्रवन्ति भेदेन। मन्त्रस्य हविष्परत्वात्। शेषं तन्त्रेण।

(१) नानाबीजेष्टौ सन्निपातात्तन्त्रेणाभिमन्त्रणम्।

मुपविश्याङ्गारापोहनसमर्थम् उपवेषापराख्यं काष्ठं धृष्टिसंज्ञकम् "ॐधृष्टिरसि" इति (य० सं० १।१७) मन्त्रेणादद्यात् । अथ "ॐअपाग्ने अग्निमामादं जहि निष्क्रव्यादꣳ सेध" इति (य० सं० १।१७) मन्त्रेणोपवेषापरनाम्ना धृष्टिसंज्ञकेन काष्ठेन हस्तास्थितेन गार्हपत्यस्याङ्गारान्स्वस्थानात्प्राच्यां प्रेरयति खरमध्ये एव, येनाङ्गारस्थाने अतितप्तभूमौ कपालान्युपदधीयेरन्(१)। ततः "ॐआ देवयजं वह" इति (य०सं०१।१७) मन्त्रेणोपवेषेणैव प्राक्प्रेरिताङ्गारमध्यादेकमङ्गारं गार्हपत्यखरस्य पश्चाद्भागे दक्षिणे आग्नेयपुरोडाशार्थं कल्पितस्य स्थानस्य मध्ये स्थापयेत् (२) ।

ततः "ॐध्रुवमसि पृथिवीं दृꣳह ब्रह्मवनि त्वा क्षत्रवनि सजातवन्युपदधामि भ्रातृव्यस्य वधाय" इति मन्त्रेण (य० सं० १।१७) मध्ये स्थापितस्याङ्गारस्योपरि उत्तानं मध्यमं कपालमुपदध्यात् । ततः (३)वामहस्ताङ्गुल्या स्पृष्टे एव मध्यमकपाले एकमङ्गारम् "ॐअग्ने ब्रह्म गृभ्णीष्व" इति मन्त्रेण (य० सं० १।१८) निदध्यात्(४) । ततः

---

(१) अङ्गारापोहनं च देशरेचनार्थम् । रिक्ते हि देशे कपालोपधानस्य योग्यत्वात् । एवंच चर्विष्टौ धानाभर्जनेच देशरेचनकृतोपकाराभावान्न अङ्गारापोहनम्। अङ्गारेष्वेवाधिश्रयणस्य तयोन्र्याय्यत्वात् ।

(२) "तं मध्यमेन कपालेनोपदधाति" इति वचनात् मध्यमकपालस्यायं धर्मो न कपालमात्रस्येति बोध्यम् ।

(३) "अभिनिहितमेव सव्यस्य पाणेरङ्गुल्या भवति" इति श्रुतेः।

(४) कपालोपरि अङ्गारनिधानं च कपालसंस्कारार्थम् । तेन प्रतिकपालमावर्तते । कपालेऽङ्गारं निदधातीत्यत्र गुणविभक्तिनिर्दिष्टमपि कपालं प्रयोजनवत्त्वात् अगारे गावो वास्यन्तामित्यत्रा-

मध्यमकपालस्य पश्चाद्भागे "ॐवरुणमस्यन्तरिक्षं दृꣳह ब्रह्मवनि त्वा क्षत्रवनि सजातवन्युपदधामि भ्रातृव्यस्य वधाय" इति मन्त्रेण (य० सं० १। १८) द्वितीयं कपालमुपधाय वामहस्ताङ्गुल्या स्पृष्टे एव तस्मिन् "ॐअग्ने ब्रह्मेति" मन्त्रेणाङ्गारं निधाय मध्यमकपालस्य पुरस्ताद्भागे "ॐधर्त्रमसि दिवं दृꣳह ब्रह्मवनि त्वा क्षत्रवनि सजातवन्युपदधामि भ्रातृव्यस्य वधाय" इति मन्त्रेण (य० सं० १। १८) तृतीयकपालमुपधाय पूर्ववत् तस्मिन्नङ्गारं निधाय मध्यमकपालस्य दक्षिणतः ॐविश्वाभ्यस्त्वाशाभ्य उपदधामि" इति मन्त्रेण (य० सं० १। १८) चतुर्थकपालमुपधाय पूर्ववत् तस्मिन्नङ्गारं निधाय दक्षिणत उपहितस्य चतुर्थकपालस्य पूर्वतः "ॐचित स्थोर्ध्वचितः" इति मन्त्रेण (य० सं० १। १८) पञ्चमं कपालमुपधाय पूर्ववत्तस्मिन्नङ्गारं निधाय दक्षिणतो निहितस्य चतुर्थकपालस्य पश्चाद्भागे "ॐचित स्थेति" मन्त्रेण षष्ठं कपालमुपधाय पूर्ववत्तस्मिन्नङ्गारं निधाय मध्यमकपालस्य पश्चिमतः स्थापितस्य द्वितीयकपालस्य उत्तरतः "ॐचित स्थेति" मन्त्रेण सप्तमकपालमुपधाय पूर्ववत्तस्मिन्नङ्गारं निधाय सप्तमकपालस्य पूर्वतः "ॐचित स्थेति" मन्त्रेण अष्टमं कपालमुपधाय पूर्ववत्तस्मिन्नङ्गारं निदध्यात्।

पञ्चमादीनामष्टमान्तानां कपालानां पूर्वादिक्रमेण उपधानं प्रादक्षिण्यानुरोधेन बोध्यम्।

अग्नीषोमीयपुरोडाशसंबन्धिनाम् एकादशकपालानामुपधानक्रमश्चैवम्। आग्नेयपुरोडाशार्थमुपहितकपालानां दक्षिणतः मध्ये पूर्वं मध्यमं, तस्य पश्चाद्भागे द्वितीयं, तस्य पूर्वतः तृतीयं,

मध्यमस्य दक्षिणतः चतुर्थं, चतुर्थस्य पूर्वतः एकस्य कपालस्यान्तरालं परिशिष्य पञ्चमं, चतुर्थपञ्चमयोरन्तराले षष्ठं, चतुर्थस्य पश्चिमतः अव्यवधानेन सप्तमं, तदव्यधानेन तत्पश्चिमतः अष्टमं, सर्वेषामुत्तरतः नवमदशमैकादशानि प्राक्संस्थानि(१)।

ततः "ॐभृगूणामङ्गिरसां तपसा तप्यध्वम्" इत्यनेन (य० सं० १। १८) मन्त्रेण(२) ज्वलद्भिरङ्गारैः सर्वाणि कपालानि आच्छादयेत्।

ततः (३)अग्नीदेव प्राणीतीः उपसर्जनीः (पिष्टसंयवनार्था अपः) गार्हपत्येऽधिश्रयेत्।

आग्नीध्रे कपालानि उपदधाने एव अध्वर्युः पेषणार्थम् "ॐशर्मासि" इति मन्त्रेण (य० सं० १। १९) कृष्णाजिनमादाय "ॐअवधूतं रक्षोऽवधूता अरातयः" इति

---

गारवत् प्रावारे कुसुमानि वास्यन्तामित्यत्र प्रावारवच्च संस्कार्यम्। यथा गवां वासनेन संस्कृतं गृहं दैवपित्र्यकर्मोपयोगि, यथावा पुष्पवासनेन संस्कृतः प्रावारो धारणोपयोगी भवति तथा अङ्गारनिधानेन संस्कृतं कपालं पुरोडाशपाकोपयोगि भवति। अतः प्रयोजनवत्त्वात्तदेव संस्कार्यमिति तदनुरोधेन अङ्गारनिधानावृत्तिर्युक्तेति भावः।

(१) दर्शेष्टौ द्वादशकपालानामुपधानमपि एवमेव। तत्र सर्वेषामुत्तरतः नवमदशमैकादशद्वादशानि प्राक्संस्थानि उपधेयानि।

(२) एककपाले तप्यस्वेति द्विकपाले तप्येथामिति विपरिणामः। समवेतार्थत्वात्।

(३) अध्वर्योः पेषणे व्यापृतत्वात् अग्नीध एव तत्कर्तृत्वम्। पेषणेन यौगपद्यं च उपसर्जन्यधिश्रयणस्य उपधानेन सह उपक्रान्तादपि पेषणात्पूर्वमेव कपालोपधानाव्यवधानेन विधानात् सिध्यति।

यत्रतु अध्वर्योः कार्यान्तरव्यापृतिर्नास्ति यथा चर्विष्ट्यां तत्राध्वर्योरेवोपसर्जन्यधिश्रयणकर्तृत्वम्।

मन्त्रेण ( य० सं० १ । १९ ) कृष्णाजिनमवधूय अप उपस्पृश्य कृष्णाजिनम् "ॐअदित्यास्त्वगसि प्रति त्वाऽदितिर्वेत्तु" इत्यनेन ( य० सं० १ । १९ ) प्रत्यग्ग्रीवमास्तीर्य सव्यहस्ताङ्गुलिपृष्ठे एव कृष्णाजिने प्रागग्रां दृषदं कृष्णाजिनस्योपरि "ॐधिषणाऽसि पर्वती प्रति त्वाऽदित्यास्त्वग्वेत्तु" इति मन्त्रेण ( य० सं० १ । १९ ) निधाय दृषदः पश्चाद्भागे ऽधस्तात् उदगग्रां शम्यां "ॐदिव स्कम्भनीरसि" इति मन्त्रेण (य०सं०१।१९)तथा प्रेरयेत् यथा दृषदः प्राचीनप्रवणता सम्पद्येत। ततः दृषदः उपरि उदगग्रामुपलां "धिषणाऽसि पार्वतेयी प्रति त्वा पर्वती वेत्तु" इति ( य० सं० १ । १९ ) मन्त्रेण निदध्यात्। ततः "ॐधान्यमसि धिनुहि देवान्"इति मन्त्रेण (य०सं०१।२०)दृषदि तण्डुलानोप्य "ॐप्राणाय त्वा" (पिनष्मि) "ॐउदानाय त्वा (पिनष्मि) "ॐव्यानाय त्वा" (पिनष्मि)इति मन्त्रैः(य०सं०१।२०)प्रतिमन्त्रं तण्डुलान् पिंष्यात्।

अध्वर्युणा तण्डुलेषु पिष्यमाणेषु, आग्नीध्रेण कपालेषु ताप्यमानेषुच, ब्रह्मा(१) पात्रान्तरादाज्यमाज्यस्थाल्यां "ॐमही-

---

(१) अध्वर्योः पेषणे व्यापृतत्वात् अग्नीधश्च कपालोपधाने व्यापृतत्वात् "पिष्यमाणेषु निर्वपत्यन्यो महीनामित्याज्यम्" इत्यत्र अन्यशब्देन ब्रह्मैव ग्रहीतुमर्ह इति भावः। "निरुप्याज्यं वेदोऽसीति यजमानो वेदं करोति" इति सूत्रात् (का०श्रौ०१।३।२२)यजमानस्यैव आज्यनिर्वापकर्तृत्वं केचिद्वदन्ति। तन्न युक्तम्। सर्वकर्मकरणार्थमृत्विजां परिकीर्तितत्वेन "अध्वर्युः कर्मसु वेदयोगात्" "वचनविरोधाभ्यामन्यः" इति ( का० श्रौ० १ । ८ । २९-३० ) सूत्रकारप्रस्थानाच्च ऋत्विजो ब्रह्मण एव आज्यनिर्वापकरणौचित्यात्। निरुप्येति ल्यप्प्रयोगस्तु 'स्थिते ब्रह्मणि'इत्यध्याहारेण स्थितिक्रियासमानकर्तृकत्वोपपादनेनोपपाद्यः। नहि श्रौतक्रियासमानकर्तृकत्व-

नां पयोऽसि" इति मन्त्रेण ( य० सं० १।२०) प्रक्षिपेत् ।

ब्रह्मणा च आज्ये निरुप्ते सति यजमानः "ॐवेदोऽसि येन त्वं देव वेद देवेभ्यो वेदो ऽभवस्तेन मह्यं वेदो भूयाः" इति मन्त्रेण (य०सं० २।२१।) कुशमुष्टिं प्रदक्षिणावृत्तं वत्सजानुसदृशं वेण्याकारं वा प्रादेशमात्रं वेदं कुर्यात् ।

अध्वर्युः तण्डुलेषु पिष्टेषु दृषद उपरि वर्तमानानि पिष्टानि "ॐदीर्घामनुप्रसितिमायुषे धां देवो वः सविता हिरण्यपाणिः प्रतिगृभ्णात्वच्छिद्रेण पाणिना"इति मन्त्रेण(य०सं०१।२०)कृष्णाजिने उपलया पातयेत्। ततः "ॐचक्षुषे त्वा" ( ईक्षे ) इति मन्त्रेण (य०सं०१।२०)कृष्णाजिने पतितानि पिष्टानि विलोकयेत् । ततः पवित्रे पाण्यां कृत्वा कृष्णाजिनात्पिष्टान्यादाय सपवित्रायां पात्र्यां "ॐदेवस्य त्वा सवितुः प्रसवे ऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् । संवपामि" इत्यनेन (य०सं०१।२१) मन्त्रेणावपेत् । तत उत्थाय गार्हपत्यस्य पश्चादुपविशति वेदिमध्ये वा ।

तत आग्नीध्रः स्फ्यं सव्ये गृहीत्वा आधिश्रिता उपसर्जनीः उदगुद्वास्य अध्वर्योर्दक्षिणेनानीय पिष्टानामुपरि धृतस्य सपवित्रस्य अध्वर्युहस्तस्योपरि निनयेत् ।

अध्वर्युश्च आग्नीध्रेण निनीयमाना उपसर्जनीः दक्षिणहस्तधृताभ्यां पवित्राभ्यां "ॐसमाप(१) ओषधीभिः

---

मेव लयप्रयोगे नियतं निमित्तम् । "यद्योर्वंशं नरः श्रुत्वा सर्वपापैः प्रमुच्यते" इत्यादौ व्यभिचारात् । "न वै ब्रह्मा प्रचरति, न स्तुते, न शंसति" इति तु अन्यस्य ऋत्विजः कर्तृत्वसंभवे एव बोध्यम् । स्पष्टं चेदमत्रैव कर्कभाष्ये ।

(१) अयं मन्त्रः अपामभिधायकत्वात् तत्कार्यापन्ने पयसि दधनि घृते च विपरिणम्यते ।

समोषधयो रसेन। स॰ रेवतीर्जगतीभिः पृच्यन्ताᳬ सं मधुमतीर्मधुमतीभिः पृच्यन्ताम्" इति मन्त्रेण(य०सं० १। २१ प्रतिगृह्णीयात्।

अग्नीच्च तथा निनयनं कुर्याद्यथा अध्वर्योर्मन्त्रान्ते ग्रहणं सम्पद्येत।

ततः अध्वर्युः"ॐजनयत्यै त्वा संयौमि"इति मन्त्रेण(य० सं०१।२२)उदकं(१) पिष्टानि च संयौति(मिश्रयति)। समं विभज्य द्वौ पिण्डौ कृत्वा पात्र्यामुदक्संस्थौ निधाय "ॐइदमग्नेः"(य० सं०१।२२)इति दक्षिणस्थं पिण्डमालभ्य"ॐइदमग्नीषोमयोः" इति मन्त्रेण ( य०सं० १। २२) उत्तरस्थं पिण्डमालभेत(२)।

ततो(३)ब्रह्मा "ॐइषे त्वा" (अधिश्रयामि) इति मन्त्रेण (य०सं०१।२२) गार्हपत्यखरस्य मध्ये एव दक्षिणतः आज्यमधि

(१) संयवनं पिण्डार्थत्वाच्चरौ न भवति। कार्यलोपात्। पिष्टचरौ तु एकीकरणकार्यसत्त्वात् प्रवर्तते एव। पात्र्यामावापोऽपि संयवनाभावाच्चरौ न प्रवर्तते।

(२) दर्शेष्टौ "इदमिन्द्राग्न्योः" इत्येवमालभेत।

आलम्भस्य समविभागपूर्वकत्वात् तस्य च भिन्नभिन्नपुरोडाशसंपत्तिरूपदृष्टप्रयोजनार्थत्वात् एकके आग्नावैष्णवादौ तदभावेन विभागाभावात् तत्पूर्वक आलम्भोऽपि न प्रवर्तते। तस्यापि "असंहरिष्यन्नालभते" इत्यनेन असंहारार्थतया दृष्टार्थत्वावगमात्। विनिगमनाविरहेण उभयोरालम्भस्य दृष्टार्थत्वध्रौव्येण अग्नीषोमीयालम्भस्यादृष्टार्थत्वकल्पने मानाभावात्।

समं विभज्यालभते इत्येतावतैव सिद्धे असंहरिष्यन्निति कथनं यस्य यदा असंहार इष्टस्तस्य तदा आलम्भो यथा स्यादित्येतदर्थम्। ततश्च चरूणां फलीकरणान्ते पौष्णस्य ईक्षणान्ते आलम्भः।

(३) अध्वर्य्वग्नीधोः पुरोडाशयोर्व्यापृतत्वात्। उपसदादौ तु अविरोधादध्वर्योरेवाधिश्रयणकर्तृत्वम्।

श्रयेत् । (अग्नेरुपरि आज्यस्थालीं निदध्यादित्यर्थः) ।

ब्रह्मणि आज्यस्थालीं निदधत्येव सति अध्वर्युः अष्टसु कपालेषु प्रथमं पुरोडाशं स्फ्योपग्रहं कृत्वा "ॐघर्मोऽसि विश्वायुः" इति मन्त्रेण (य०सं०१।२२) अधिश्रयेत् ।

तस्मिन्नेव काले आग्नीध्रः एकादशसु कपालेषु द्वितीयं पुरोडाशं "ॐ घर्मोसि विश्वायुः" इति मन्त्रेण अधिश्रयेत्।

ततः अध्वर्युराग्नीध्रश्च यथाधिश्रयणं प्रथमद्वितीयौ पुरोडाशौ "ॐउरुप्रथा उरु प्रथस्वोरु ते यज्ञपतिः प्रथताम्"इति मन्त्रेण(य०सं० १।२२)यावत्कपालं प्रथयताम्(अतिपृथून् कुर्याताम्) एवमेव"ॐअग्निष्टे त्वचं मा हिंसीत्"इति मन्त्रेण (य०सं०१ २२) स्वस्वपुरोडाशमद्भिरभिमृशेतां सकृत् त्रिर्वा । त्रिः पक्षेऽपि मन्त्रः सकृदेव । अभिमर्शनं च प्रथने क्रियमाणे यत्रक्वचन विदीर्णं भवति तत्संधानम् ।

ततः पात्र्या अङ्गुलीनां च पिष्टलेपापनयनं प्रक्षालनञ्च कार्यम्(१) । ततः अध्वर्युः गार्हपत्यादङ्गारमादाय "ॐअन्तरितꣳ रक्षोऽन्तरिता अरातयः"(का.श्रौ.२।५।२१) इति मन्त्रेण आज्यस्थालीपुरोडाशान् परितः प्रदक्षिणमङ्गारं भ्रमयेत् । ततो ऽङ्गारं गार्हपत्ये प्रक्षिप्य हस्तस्याप्रादक्षिण्येन परिवर्तनं कृत्वा अप उपस्पृश्य "ॐदेवस्त्वा सविता-श्रपयतु वर्षिष्ठेऽधिनाके"इति मन्त्रेण (य०सं०१।२२)दर्भ-

(१) "पात्र्यङ्गुलिप्रक्षालनमाप्त्येभ्यो निनयति" (का० श्रौ० २ । ५ । २५ ) इत्यनेन प्रक्षालनोदकस्य "पिष्टलेपाञ्जुहोति" (का० श्रौ० ३ । ८ । १ ) इत्यनेन पिष्टलेपानां च प्रतिपत्तिविधानात् अर्थात् प्राप्तयोस्तयोः क्रमाकाङ्क्षायां योग्यत्वात् अभिमर्शनानन्तरं पर्यग्निकरणात्पूर्वं तयोरनुष्ठानं व्यवस्थापितं कर्काचार्यैः ।

तृणैर्ज्वलद्भिः प्रथमं पुरोडाशं श्रपयित्वा एवमेव द्वितीयं श्रपयेत् ।(१)ततः शृताशृतज्ञानाय "ॐमा भेर्म्मा संविक्थाः" इति मन्त्रेण(य०सं०१।२३)क्रमेण पुरोडाशावालभेत। अशृतौ चेत्पुनः श्रपणप्रक्षेपः । शृतौचेत् "ॐअतमेरुर्यज्ञोऽतमेरुर्यजमानस्य प्रजा भूयात्" इति मन्त्रेण (य०सं०१। २३) वेदेन, उपवेषेण वा तप्ततरेणाङ्गारमिश्रेण भस्मनाऽऽच्छादयेत् ।

ततः पात्र्यङ्गुलिप्रक्षालनजलं पात्रीस्थमेव गार्हपत्यदीप्तैस्तृणैर्ज्वलद्भिस्तापयित्वा विहारस्योत्तरतः स्फ्येन त्रीन् गर्तान् प्राक्संस्थान् कृत्वा परस्परं संसर्गम् अप्राप्नुवन् प्रत्यक्संस्थं "ॐत्रिताय त्वा" ( निनयामि ) "ॐद्विताय त्वा" ( निनयामि ) "ॐएकताय त्वा" ( निनयामि ) इति प्रतिमन्त्रं ( य०सं०१। २३ ) क्रमेण निनयेत् ।

प्रतिनिनयनं च "ॐ इदं त्रितायाप्त्याय न मम" "ॐ इदं द्वितायाप्त्याय न मम" "ॐइदमेकतायाप्त्याय न मम"इत्येवं त्यागं क्रमेण यजमानः कुर्यात् ।

ततः अध्वर्युः अन्वाहार्यं ( दक्षिणार्थमोदनं ) चतुर्णाम् ऋत्विजां तृप्तिपर्यन्तभोजनसमर्थं दाक्षिणाग्नौ श्रपणार्थमधिश्रयेत। जलंचात्र प्राणीतं लौकिकं वेति कर्काचार्याः ।

अत्र वा यजमानस्य व्रतग्रहणम् । (२)ततोऽध्वर्युः आहव-

---

(१) धानानां पक्वताज्ञानस्य दर्शनादेवोपपत्तेर्नालम्भः ।

(२) अथ वेद्यादिसाधनप्रकारः ।

गार्हपत्यमध्यादाहवनीयमध्यपर्यन्तं मध्येऽन्तरम् अष्टौ, एकादश, द्वादश वा पदानि । गार्हपत्यमध्यत्वेन कल्पितं स्थानं केन्द्रं परिकल्प्य सार्धत्रयोदशाङ्गुलमितत्रिज्यया वृत्तं कार्यम् । इदं गार्हपत्याग्नेः स्थानम् । आवहनीयस्थानमायामतो विस्तारतश्च हस्तमितम् । गार्हपत्याहवनीयान्तरस्य द्वादशपदपरिमितत्वपक्षे तदन्त-

नीयपश्चाद्भागे पश्चात् प्रथमः द्वितीयः तृतीयः चतुर्थः इति, मध्ये प्रथमः द्वितीयः तृतीय इति, प्राग्भागे प्रथमः द्वितीयः तृतीय इति वेदिं मिमीत ।

आहवनीयाग्निमभितः अंसौ मातव्यौ । पश्चात् श्रोणिं च कल्पयेत ।

---

रस्य षड्हस्तात्मकत्वात् षड्हस्तां रज्जुं तदीयषष्ठभागेन हस्तात्मकेन संयोज्य अर्थात्सप्तहस्तां रज्जुं गृहीत्वा तस्या अन्तयोः पाशौ कृत्वा मध्ये च तृतीये तृतीये भागे चिह्नं कृत्वा एकं पाशं गार्हपत्यमध्यशङ्कौ आसज्य द्वितीयपाशं आहवनीयमध्यशङ्कौ आसञ्जयेत् । रज्जुमध्यवर्तिनोर्द्वयोश्चिह्नयोः पश्चिमचिह्नस्थाने रज्जुं गृहीत्वा दक्षिणत आकर्षयेत्, यत्र तच्चिह्नं पतति तत्र चिह्नं कृत्वा तस्मात्स्थानात् उत्तरतः सार्धनवाङ्गुलव्यवहिते देशे शङ्कुर्देयः । शङ्कुस्थानं केन्द्रत्वेन परिकल्प्य यवाधिकोनविंशत्यङ्गुलमितत्रिज्यया वृत्तं कार्यम् । वृत्तमध्ये केन्द्रसंलग्ना परिधिपूर्वभागमारभ्य परिधिपश्चिमं यावत् सरलरेखा कार्या । इयं च व्यासशब्देन व्यवह्रियते सांवत्सरैः । रेखात उत्तरभागस्य त्यागः कार्यः । वृत्तस्य दक्षिणार्धे दक्षिणाग्निस्थानम् । पूर्वोक्तयोश्चिह्नयोः पूर्वचिह्नस्थाने रज्जुं गृहीत्वा उत्तरत आकर्षणे यत्र चिह्नं पतति तदुत्करस्थानम् । आहवनीयमध्यशङ्कुसकाशात्पश्चिमतस्त्र्यरत्निव्यवहिते देशे शङ्कुर्देयः । तच्छङ्कुसकाशात् दक्षिणत उत्तरतश्च द्व्यरत्निव्यवहिते देशे शङ्कुर्देयः । आहवनीयप्राचीशङ्कुसकाशात्सार्धारत्निव्यवहिते देशे दक्षिणत उत्तरतश्च शङ्कुर्देयः । चतुर्षु कोणस्थशङ्कुषु सूत्रार्पणात् विषमचतुरश्रं भवति । प्राचीशङ्कुमारभ्य पश्चिमशङ्कुपर्यन्तं कोणद्वयवेष्टनेन सूत्रं प्रदेयम् । तत्सूत्रार्धपरिमितेन सूत्रेण प्राचीशङ्कुमारभ्य दक्षिणकोणस्थशङ्कुवेष्टनेन दक्षिणतः, उत्तरकोणस्थशङ्कुवेष्टनेन उत्तरतश्च शङ्कुर्देयः । ताभ्यां शङ्कुभ्यां पूर्वोक्तसूत्रार्धचतुर्थांशेन वेदिमध्ये संग्रहौ कार्यौ । द्वादशाङ्गुलं पदम् । अष्टयवमङ्गुलम् । चतुर्विंशत्यङ्गुलो हस्तः ॥ इति वेद्यादिसाधनप्रकारः ।

ततः वेदिं परिसमुह्य पूर्ववितृतीये उत्तरतः अग्नीत् उत्करं कुर्यात् ।

ततोऽध्वर्युः पूर्वमासादितवेदितृणसहितं स्फ्यम् "ॐदेवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम्। आददेऽध्वरकृतं देवेभ्यः(१)" इति (य०सं०१।२४)मन्त्रेणादाय सव्यहस्ते सतृणं स्फ्यं निधाय दक्षिणेन हस्तेन आलभ्य "ॐइन्द्रस्य बाहुरसि दक्षिणः सहस्रभृष्टिः शततेजा व्वायुरसि तिग्मतेजा द्विषतो व्वधः" इति ( य० सं० १ । २४ ) सस्वरं जपति । स्तम्बयजुर्हरणादर्वाक् हस्तमार्जनेन तीक्ष्णीकृतेन स्फ्येन पृथिव्याः आत्मनश्च स्पर्शो न कर्तव्यः ।

ततः तत्तृणं "ॐपृथिव्यै वर्मासि" ( का० श्रौ० २ । ६ । ८ ) इति मन्त्रेण वेद्यामुदगग्रं निधाय "ॐपृथिवि (२)देवयजन्योषध्यास्ते मूलं माहिꣳसिषम्" इति मन्त्रेण ( य० सं० १ । २५ ) तृणस्याधस्ताद्भुवि, तृणे एव वा स्फ्येन प्रहरेत् । ततः "ॐव्रजं गच्छ गोष्ठानम्" इति मन्त्रेण(३) ( य० सं० १ । २५ ) प्रहरणेनोत्खातं पुरीषं हस्तेन गृहीत्वा "ॐवर्षतु ते द्यौः" इति मन्त्रेण ( य० सं० १ । २५ ) वेदेः

(१) पितृयज्ञे देवपितृभ्य इति विपरिणामः ।

(२) पितृयज्ञे देवयजनीत्यस्य स्थाने देवपितृयजनीति प्रयोगः । वेदेरङ्गप्रधानार्थत्वात् । परिसमूहनादीनां वेदिसंस्काराणामेव प्रवृत्तत्वात् वेदेरेवात्र पृथिविशब्दाभिधेयत्वात् । एवमुत्तरमन्त्रे देवयजनादित्यस्य स्थाने देवपितृयजनादिति प्रयोगः पितृयज्ञे ।

(३) शाखान्तरे व्रजंगच्छेत्यादीनां पुरीषादानादिषु अवयवशो विनियोगविधानात् अवयवशः पुरीषादानादिषु एषां मन्त्राणां प्रयोगः प्रदर्शितः । नतु प्रहरणशेषत्वमङ्गीकृतम् । कर्काचार्याणामसंमतत्वात् ।

प्रहरणदेशे प्रेक्ष्य गृहीतं पुरीषम् "ॐवधान देव सवितः परमस्यां पृथिव्याᳬं शतेन पाशैर्योऽस्मान्द्वेष्टि यं च वयं द्विष्मस्तमतो मा मौक्" इति मन्त्रेण (य०सं०१।२५) उत्करे प्रक्षिपेत् ।

ततः "ॐअपाररुं पृथिव्यै देवयजनाद्वध्यासम्" इति मन्त्रेण(य०सं० १ । २६) पूर्वप्रहृतात् उत्तरस्यां तृणस्याधस्तात् तृणे वा स्फयेन द्वितीयवारं प्रहरेत् । उदकोस्पर्शः(१) । ततः पूर्ववत्पुरीषादान-वेदिप्रेक्षण-पुरीषप्रक्षेपणानि कुर्यात् ।

ततोऽग्नीत् स्फ्यं गृहीत्वा "ॐअररो दिवं मा पप्तः" इति मन्त्रेण ( य० सं० १ । २६ ) पाणिभ्यामुत्करमभिन्यस्यति ( अधः पातयतीत्यर्थः ) उदकोपस्पर्शः ।

ततः अध्वर्युः "ॐद्रप्सस्ते द्यां मा स्कन्" इति ( य० सं० १ । २६ ) मन्त्रेण द्वितीयप्रहृतादुत्तरतः तृणस्याधस्तात् तृणे वा तृतीयवारं प्रहृत्य पुरीषादान-वेदिप्रेक्षण-पुरीषनिरसनानि पूर्ववत्कृत्वा तृतीयप्रहृतादुत्तरे तृणस्याधस्तात्तृणे वा तूष्णीं चतुर्थवारं प्रहृत्य तूष्णीमेव सतृणपुरीषादानम्, उत्खातप्रदेशप्रेक्षणं, सतृणस्य पुरीषस्य उत्करे प्रक्षेपणं च कुर्यात् ।

ततः "ब्रह्मन् 'पूर्वं परिग्रहं परिग्रहीष्यामि" इति ब्रह्माणमामन्त्रयेत् ।

---

(१) "अररुर्ह नामासुररक्षसमास" इति श्रुतौ अररोः रक्षस्त्वाभिधानात् मन्त्रस्य रक्षोऽभिधायकत्वात् उदकस्पर्शः । "रौद्रं राक्षसमासुरमाभिचरणिकं मन्त्रमुक्त्वा पित्र्यमात्मानं चालभ्योपस्पृशेदपः" ( का० श्रौ० १ । १० । १४ ) इति सूत्रेण राक्षसादिमन्त्राभिधाने आत्मालम्भे च उदकोपस्पर्शविधानात् ।

ततो ब्रह्मा "ॐबृहस्पते परिगृह्हाण वेदिं, सुगा वो देवाः सदनानि सन्त्वस्यां बर्हिः प्रथतांॅ साध्वन्तरहिंॅस्रा पृथिवी देवी देव्यस्तु"(का०श्रौ०२।२।१०) इति, "देवता वर्धय त्वम्"इत्यादि धेहीत्यन्तं च उपांशु पठित्वा "ॐपरिगृह्हाण" इत्युच्चैः अध्वर्युम् अनुजानीयात् ।

ततोऽनुज्ञातोऽध्वर्युः स्फ्येन दक्षिणतः "ॐगायत्रेण त्वा च्छन्दसा परिगृह्णामि" इति मन्त्रेण ( य० सं० १ । २७ ) वेदेः नैर्ऋतकोणादारभ्य आहवनीयखरपर्यन्तां रेखां कृत्वा "ॐत्रैष्टुभेन त्वा च्छन्दसा परिगृह्णामि" इति मन्त्रेण ( य० सं० १ । २७ ) वेदेः पश्चिमपार्श्वे दक्षिणश्रोणिमारभ्य उत्तरश्रोणिपर्यन्तां रेखां कृत्वा "ॐजागतेन त्वा च्छन्दसा परिगृह्णामि" इति मन्त्रेण ( य सं० १ । २७ ) वेदेरुत्तरभागे उत्तरश्रोणिमारभ्य आहवनीयखरपर्यन्तां रेखां कुर्यात् । इदं परिग्रहणं च 'इयती वेदिः कर्तव्या' इति ज्ञापनार्थम् ।

ततोऽध्वर्युः वेद्यां प्रागायताः उदक्संस्थास्तिस्रो रेखास्तूष्णीं स्फ्येन कृत्वा "ॐहर त्रिः"(१) इति अग्नीधं ब्रूयात् ।

ततोऽग्नीत् यथोल्लिखिताभ्यो रेखाभ्यः पांसूनुद्धृत्य उत्करे प्रक्षिप्य ता रेखाः संमृशेत् ( मार्जनेन समीकुर्यात् ) ।

ततोऽध्वर्युः अभ्रिमादाय प्रदक्षिणं सर्वतो वेदिं सांसीत्यङ्गुलां खनति(२) । ततो "ब्रह्मन्नुत्तरं परिग्रहं परिग्रही-

---

(१) वरुणप्रघासेषु वेदिद्वित्वेन 'हर त्रिस्त्रिः' इति साभ्यासत्रिशब्दप्रयोगः कर्तव्यः ।

(२) कात्यायनेन पूर्वमन्वाहार्याधिश्रयणानन्तरं निर्दिष्टस्य वेदिखननस्य "अत्र वेदिकरणं यथोक्तम्" ( का० श्रौ० २ । ६ । २२) इति रेखासंमर्शनानन्तरं विधानात्तत्रैवानुष्ठानम् । नच तथैव

ष्यामि" इति ब्रह्माणमामन्त्रयेत्।

ब्रह्मा च पूर्ववत् "ॐबृहस्पते परिगृह्णाण" इत्यादिमन्त्रमुपांशु पठित्वा "ॐपरिगृह्णाण" इत्युच्चैः अध्वर्युमनुजानीयात्।

ततः स्फ्येन अध्वर्युः वेदेः दक्षिणपार्श्वे दक्षिणश्रोणिमारभ्याहवनीयखरपर्यन्तं "ॐसुक्ष्मा चासि शिवा चासि" इति मन्त्रेण ( य० सं० १।२७ ) रेखां कृत्वा पश्चिमपार्श्वे "ॐस्योना चासि सुषदा चासि" इति मन्त्रेण ( य० सं० १।२७ ) दक्षिणश्रोणिमारभ्य उत्तरश्रोणिपर्यन्तं रेखां कृत्वा उत्तरपार्श्वे उत्तरश्रोणिमारभ्य आहवनीयखरपर्यन्तम् "ॐऊर्ज्जस्वती चासि पयस्वती च" इति मन्त्रेण ( य० सं० रेखां कुर्यात्।

ततः "ॐपुरा क्रूरस्य विसृपो विरप्शिन्नुदादाय पृथिवीं जीवदानुम्। यामैरयँश्चन्द्रमसि स्वधाभिस्तामु धीरासो ऽअनुदिश्य यजन्ते" इति मन्त्रेण ( य० सं० १।२८ ) पुरस्तादारभ्य प्रतीचीं दिशं यावत् अनुमृज्यात् ( स्फ्येनैव समीकुर्यात् )। प्राक्प्रवणता च वेदेः

---

वेदिमानकरणमप्यत्रैवोचितमिति वाच्यम्। खननस्यैव वेदिस्वरूपप्रकाशकत्वेन स्वरूपनिष्पत्त्यनुकूलव्यापारार्थकेन कृधातुना समभिव्याहारात् वेदिस्वरूपनिष्पत्त्यनुकूलव्यापारस्वरूपखननस्यैवाभिधानेन तावन्मात्रस्यैवाभिधानात्। अत एवोत्तरत्र परिसमूहनादीनां सिद्धिः। वेदिमानं विना तु स्थलविशेषाज्ञानान्न किञ्चिन्नियतदेशे सिध्येदिति बोध्यम्।

अंसयोरपि वेद्यन्तर्गतत्वात् त्र्यङ्गुलखननम्। "अपोह्य बर्हीँषि निदध्यात्य॒सदेशे" इति सूत्रकारेण अंसयोः स्तरणसूचनात् तयोर्वेद्यन्तर्गतत्वम्।

सूपचरणा च स्वधिचरणा च तयोरावेिदि। अग्नि-रिदꣳ हविरजुषतावीवृधत महो ज्यायोऽकृत। सोम इदꣳ हविरजुषतावीवृधत महो ज्यायोऽकृत। अग्निरिदꣳ हविरजुषतावीवृधत महो ज्यायोऽकृत।

(उपांशु) अग्नीषोमौ (उच्चैः) इदꣳ हविः (उपांशु) अजुषेतामवीवृधेताम् (उच्चैः) महो ज्यायः (उपांशु) अक्राताम्।

(१)(उच्चैः) अग्नीषोमाविदꣳ हविरजुषेतामवीवृधेतां महो ज्यायोऽक्राताम्। देवा आज्यपा आज्यमजुषन्तावीवृधन्त महो ज्यायोऽक्रत। अग्निर्होत्रेणेदꣳ हविरजुषतावीवृधत महो ज्यायोऽकृत।

अस्यामृधेद्धोत्रायां देवंगमायामाशास्तेऽयं यजमानः अमुकशर्मा। उत्तरां देवयज्यामाशास्ते भूयोहविष्करणमाशास्ते सजातवनस्यामाशास्ते दिव्यं धामाशास्ते यदनेन हविषाऽऽशास्ते तदश्यात् तद् ऋध्यात् तदस्मै देवा रासन्तां तदग्निर्देवो देवेभ्यो वनुतां वयमग्नेः परिमानुषाः। इष्टं च वित्तं चोभे चैनं द्यावापृथिवी अꣳहसस्पातामिह गतिर्वामस्येदं च नमो देवेभ्यः" इति सूक्तवाकं (का० हौ० प०

(१) दर्शे (उपांशु) विष्णुः (उच्चैः) इदꣳहविः (उपांशु) अजुषतावीवृधत (उच्चैः) महो ज्यायः (उपांशु) अकृतेति प्रयोगः। "उपाꣳशु काम्यदेवतायाज्यानुवाक्या, अजुषतावीवृधताकृतेति च, उच्चैरन्यत्, उपाꣳशुप्रयोगिणां चैवम्" इति (का० हौ० प० १।१३) सूत्रेण उपांशुप्रयोगाणां याज्यानुवाक्ययोः सूक्तवाकघटकानाम् अजुषत अवीवृधत अकृत इति शब्दानां च उपांशुप्रयोगस्य अन्येषां च उच्चैः प्रयोगस्य विधानात्तथा प्रयोगोल्लेख इति बोध्यम्।

१।८) पठेत्।

अध्वर्युः प्रस्तरस्यैकं तृणं परिशेष्य सूक्तवाकान्ते प्रस्तरं प्रागग्रम् आहवनीये प्रक्षिपेत्(१)।

ततोऽध्वर्युः हुतं प्रस्तरं हस्ताङ्गुलिभिः प्रदीप्ताग्निप्रदेशे प्रेरयेत्।

ततोऽग्नीत् 'अनुप्रहर' इति अध्वर्युमुच्चैरध्येषयेत्।

ततोऽध्वर्युः प्रस्तराद् गृहीतं तृणमग्नावनुप्रहृत्य "ॐ चक्षुष्पा अग्नेऽसि चक्षुर्मे पाहि" इति (य० सं० २।१६) आत्मानम् आलभ्य अप उपस्पृशेत्।

ततोऽग्नीत् "संवदस्व" इति ब्रूयात्। (शंयुवाकप्रैषार्थं संवादं कुर्वित्यर्थः)

ततोऽध्वर्युः "अगानग्नीत्" इति। (प्रस्तरशरीरो यजमानः किं स्वर्गमगमत् इत्यर्थः। किं प्रस्तरो दग्ध इति यावत्)

ततोऽग्नीत् "अगन्" इति। (अगमत् दग्धः प्रस्तर इत्यर्थः)

ततोऽध्वर्युः "श्रा३वय" इति। (होतारमाकर्णयेत्यर्थः)

ततोऽग्नीत् "श्रौ३षट्" इति। (शृणोत्येव होतेत्यर्थः)

ततोऽध्वर्युः "स्वगा दैव्या होतृभ्यः स्वस्तिर्मानुषेभ्यः शंयोर्ब्रूहि" इति होतारं प्रेषयेत्। (दैवहोतृभ्यः परि-

---

(१) सूक्तवाकप्रस्तरप्रहरणयोः कालार्थः संयोगो, नाङ्गाङ्गिलक्षणः। प्रस्तरस्य स्रुग्धारणार्थतया सूक्तवाकस्य चेष्टदेवतासंकीर्तनार्थतया उभयोरपि परार्थत्वेन परस्परमङ्गाङ्गिलक्षणसंबन्धस्य इध्मप्रक्षेपसामिधेन्यनुवचनयोरिवासंभवात्। ततश्च आतिथ्यादौ प्रस्तरप्रहरणाभावेऽपि सूक्तवाकः प्रयुज्यते एवेति कर्कभाष्ये विस्तरः। अत एवात्र यजमानकर्तृकस्त्यागो नोल्लिखितः। होमत्वाभावात् इति बोध्यम्।

ध्यग्निरूपेभ्यः स्वगा=स्वस्थानगमनमस्तु मानुषेभ्यः मानुषाय होत्रे स्वस्तिरविनाशोऽस्तु इत्यर्थः )

होता च—

(१)तच्छंय्योरावृणीमहे गातुं यज्ञाय गातुं यज्ञपतये दैवी स्वस्तिरस्तु नः स्वस्तिर्मानुषेभ्यः। ऊर्ध्वं जिगातु भेषजꣳ शन्नो अस्तु द्विपदे शं चतुष्पदे" इति (का० हौ० प० १।९) शंयुवाकं पठित्वा "अनया" इतिमन्त्रेण (का.हौ.प.१।९) प्रादेशं वेदिश्रोणौ निदध्यात्।

(शंयुवाकश्च अर्थकर्मत्वाद्यावदुक्ते निवर्तते। तन्निवृत्तौ च संवदस्वेत्यादीनां निवृत्तिः। तेषां तदर्थत्वात्)।

ततोऽध्वर्युः पश्चिमं ( प्रथमं ) परिधिम्—

"ॐयं परिधिं पर्यधत्था अग्ने देव पणिभिर्गुह्यमानः। तन्त एतमनुजोषं भराम्येष नेत्त्वदपचेतयातै"इति मन्त्रेण( य० सं० २।१७ ) हस्तेनैव आहवनीये अनुप्रहृत्य दक्षिणोत्तरौ परिधी "ॐअग्नेः प्रियं पाथो-

---

(१) शंयुवाकमन्त्रार्थः।

तच्छंयोरावृणीमहे इति (तत्ताद्दशं प्रशस्तं फलं शंयोर्बार्हस्पत्यात् आवृणीमहे प्रार्थयामहे। तफलमेवोच्यते। यज्ञाय गातुं=यज्ञस्य देवान् प्रति गमनं, यज्ञपतये गातुं=यजमानस्य देवान् प्रति गमनं च आवृणीमहे। अत्र यजमानस्य आयुषः प्राक् देवान्प्रति गमनं न प्रार्थनाविषयः किंतु प्रस्तरशरीरेणैव तद्गमनं प्रार्थ्यमिति ध्वननायाह दैवीति। नोऽस्माकं दैवी स्वस्तिः देवनिमित्तं विघ्नोपशमनं, मानुषेभ्यः स्वस्तिः मनुष्यनिमित्तकं विघ्नोपशमनं चास्तु। भेषजं सर्वथासमौषधमिदं कर्म ऊर्ध्वं जिगातु=अविघ्नेन समाप्तिं प्राप्नोतु। नोऽस्माकं द्विपदे मनुष्याय चतुष्पदे पशवे च शं सुखमस्तु। इदानीमेव देवान्प्रति गमनप्रार्थने हि एतत्प्रार्थनं नोपपद्येतेति भावः।

ऽपीतम्" ( य० सं० २। १७ ) इत्यनेन युगपत् तथैव अनुप्रहरेत्। ( परिधिप्रहरणमन्त्रयोरग्न्यभिधायकत्वात् अवभृथे विपरिणामः । परिधिप्रहरणस्य च प्रतिपत्तिकर्मत्वात् यावदुक्तान्तापच्छिन्नयोरपि प्रवृत्तिः )।

ततो जुहूपभृतावादाय "ॐ सँस्रवभागा स्थेषा बृहन्तः प्रस्तरेष्ठाः परिधेयाश्च देवाः। इमां वाचमभि विश्वे गृणन्त आसद्यास्मिन् बर्हिषि मादयध्वꣳ स्वाहा स्वाट्" इति मन्त्रेण (य०सं०२।१८) उभाभ्यां स्रुग्भ्यां संस्रवान् ( हविर्लेपान् ) उत्तरत उपविश्य जुहुयात्। ( संस्रवहोमस्य प्रतिपत्त्यर्थकर्मत्वादन्तापच्छिन्नेऽपि प्रवृत्तिः )।

"ॐ इदं विश्वेभ्यो देवेभ्यो न मम" इति यजमानस्त्यागं कुर्यात्।

ततोऽध्वर्युः वेद्या उत्तरांसे उदगग्रं स्फ्यं निधाय तत्र प्रागग्रे जुहूपभृतौ-

"ॐ घृताची स्थो धुर्यौ पातं सुम्ने स्थः सुम्ने मा धत्तम्" इति मन्त्रेण ( य० सं० २। १९ ) निदध्यात्।

ततः "ॐयज्ञ नमश्च त उप च यज्ञस्य शिवे सन्तिष्ठस्व स्विष्टे मे सन्तिष्ठस्व" इति मन्त्रेण ( य० सं० २। १९) स्फ्योपग्रहपूर्वकं वेदिमालभेत ।

ततो होता वेदमादाय, अध्वर्युः जुहूं स्रुवं च आदाय, अग्नीदाज्यस्थालीमादाय, आग्नीध्रप्रथमाः प्रत्यङ्मुखाः पत्नीसंयाजार्थं गार्हपत्यमुपगम्य गार्हपत्यस्य पश्चिमे भागे ऊर्ध्वज्ञव आसीरन्। तत्र दक्षिणतः अध्वर्युः, उत्तरत आग्नीध्रः, तयो मध्ये होता, उपविशेत्। तत्रापि अध्वर्युः गार्हपत्यदक्षिणाग्न्योरन्तरेण गत्वा, गार्हपत्यस्य दक्षिणतः पत्न्या अग्रे ईशाना-

भिमुख उपविशेत्, गार्हपत्यस्य पश्चात् होता उपविशेत्, तस्योत्तरतः दक्षिणाभिमुखोऽग्नीदुपविशेत् । ( पत्नीसंयाजाख्यं कर्मच सर्वमुपांशु भवति । "उपाꣳशु चरन्ति, चरणशब्दे सर्वम्" इति सूत्राभ्यां ( का० श्रौ० ३।७।५-६ ) तथैव विधानात्) ।

ततोऽध्वर्युः वेदं गृहीत्वा दक्षिणं जान्वाच्य 'सोमायानुब्रू३हि" इति होतारं प्रेष्य आज्यग्रहणादिकं कुर्यात् ।

ततो होता—

(७) "ॐआप्यायस्व समेतु ते विश्वतः सोम वृष्ण्यम् । भवा वाजस्य सङ्गथो३म्" इति पुरोऽनुवाक्यां ( य० सं० १२ । ११२ ) पठेत् ।

अध्वर्युश्च स्रुवेण आज्यस्थाल्याश्चतुर्वारमाज्यं जुह्वां गृहीत्वा 'ओ३ श्रा३वय' इति अग्नीधं प्रेष्य 'अस्तु श्रौ३षट्' इति अग्नीधा उक्ते 'सोमं यज' इति होतारं प्रेष्य—

(८) ॐ येयजामहे सोमꣳ सन्ते पयाꣳसि समुयन्तु

---

(७) पत्नीसंयाजमन्त्रार्थः ।

तत्रादौ सोमदेवतापुरोऽनुवाक्यामन्त्रार्थः । आप्यायस्वेति । हे सोम विश्वतः सर्वस्मात् वृष्ण्यं वीर्यं सर्वभूतोत्पत्तिकृद्बीजं ते तव समेतु समागच्छतु, तेन च वीर्येण त्वम् आप्यायस्व सर्वतो वर्धस्व । किञ्च वाजस्यान्नस्य सङ्गथे सङ्गमनाय भवा=भव, अन्नमस्मासु सङ्गमयेत्यर्थः ।

(८) सोमदेवतायाज्यामन्त्रार्थः ।

सन्ते पयांसीति । हे सोम पयांसि पातव्या रसाः ते तव अभिमातिषाहः अभिमातिं पाप्मानं सहते अभिभवतीति अभिमातिसाट् तस्याभिमातिषाहः । छान्दसं षत्वम् । संयन्तु संगच्छन्तु । उ अपिच वाजा अन्नानि संयन्तु । वृष्ण्यानि रेतांसि च संयन्तु । हे सोम पयोऽन्नवृष्ण्यैः आप्यायमानो वर्धमानः सन् त्वम् अमृताय अमरणधर्मिण्यै प्रजायै ( पुत्रादिवृद्ध्यै ) यजमानस्य भवेति शेषः । किञ्च दिवि द्यु·

वाजाः सं वृष्ण्यान्यभिमातिषाहः। आप्यायमानो अ-मृताय सोम दिवि श्रवाॅंस्युत्तमानि धिष्व३ वौ३षट्"
इति ( य० सं० १२।११३ ) होत्रा याज्यायां पठितायाम्—

"ॐ इदं सोमाय न मम" इति यजमानेन त्यागे कृते सति गार्हपत्ये जुहुयात्।

ततः "त्वष्ट्रे ऽनुब्रूहि" इति होतारं प्रेषयेत्।

होता च—

(१) "ॐ इह त्वष्टारमग्र्यं विश्वरूपमुपह्वये। अ-स्माकमस्तु केवलो३म्" इति पुरोऽनुवाक्यां (का०हौ०प० १।१०) पठेत्।

अध्वर्युश्च स्रुवेण आज्यस्थाल्याश्चतुर्वारमाज्यं जुह्वां गृहीत्वा 'ओ३ श्रा३वय' इति अग्नीधं प्रेष्य 'अस्तु श्रौ३षट्' इति अग्नीधोक्ते 'त्वष्टारं यज' इति होतारं प्रेष्य—

(२) "ॐ ये३यजामहे त्वष्टारं तन्नस्तुरीपमध पोष-

---

लोके उत्तमानि उत्कृष्टानि श्रवांसि अन्नानि आहुतिपरिणामजनितानि धिष्व धारय संपादय।

(१) त्वष्टुः पुरोऽनुवाक्यामन्त्रार्थः।

इह त्वष्टारमिति। इह अस्मिन्कर्मणि अग्र्यं मुख्यं, विश्वरूपं विश्वानि रूपाणि गर्भे विकर्तुं योग्यानि यस्यासौ विश्वरूपः तम्, त्वष्टारं देवम् उपह्वये आह्वयामि। स च त्वष्टा अस्माकं केवलोऽस्तु असाधारणत्वेन पालकोऽस्तु। ( ऋ० सं० १।१।२५ )

(२) त्वष्टुर्याज्यामन्त्रार्थः।

तन्नस्तुरीपमिति। हे त्वष्टः देव तुरीपं तूर्णं प्राप्नोतीति तुरीपम् अध=अपि च पोषयित्नु पोषयितृ तत् धनं नोऽस्मभ्यं विस्यस्व विशेषेण समर्पय। त्वं च रराणः दानशीलः। यतो यस्माद्धनादस्माभिर्लब्धात् वीरः शूरः पुत्रो जायते। शूरत्वं विशदयति कर्मण्य इत्यादिना—कर्मण्यो लौकिके वैदिके च कर्मणि कुशलः, सुदक्षः सम्यगु-

यिन्तु देव त्वष्टर्वि रराणः स्यस्व ।

एतो वीरः कर्मण्यः सुदक्षो युक्तग्रावा जायते देवकामा३ वौ३षट्" इति याज्यायां (का० हौ० प० १।१०) होत्रा पठितायाम्—

"ॐ इदं त्वष्ट्रे न मम" इति यजमानेन त्यागे कृते जुहुयात् ।

ततोऽन्तर्धानकटं गार्हपत्यस्य पुरस्ताद्धारयित्वा पत्न्यन्वारब्धोऽध्वर्युः 'देवानांपत्नीभ्योऽनुब्रू३हि' इति होतारं प्रेषयेत्।

ततो होता—

(१) "ॐ देवानां पत्नीरुशतीरवन्तु नः प्रावन्तु नस्तुजये वाजसातये। याः पार्थिवासो या अपामपि व्रते ता नो देवीः सुहवाः शर्म यच्छता३म्" इति पुरोऽनुवाक्यां (का०हौ०प०१।१०) पठेत् ।

अध्वर्युश्च पूर्ववत्स्थालीत आज्यं गृहीत्वा 'ओ३ श्रा३व-

---

त्साही शीघ्रकारी, युक्तग्रावा युक्ताः सोमाभिषवार्थं प्रयुक्ता ग्रावाणो यस्यासौ युक्तग्रावा सर्वदा सोमयागस्यानुष्ठाता, देवकामः देवैरीदृशः सेवकोऽस्माकं भूयादिति काम्यमानः, देवान् सेवितुं स्वयं कामयमानो वा । ( ऋ० सं० २ । ८ । २३ )

(१) देवपत्नीपुरोऽनुवाक्यामन्त्रार्थः ।

देवानांपत्नीरिति । देवानां पत्नीः इन्द्राण्यादयो देवपत्न्यो याः सन्ति ताः उशतीः उशत्यः, अस्मद्धितं कामयमानाः नोऽस्मान् अवन्तु रक्षन्तु । परैरापादितमरिष्टं वारयन्त्वित्यर्थः । किञ्च तुजयेऽपत्याय वाजसातये द्रव्यलाभाय नोऽस्मान् प्रावन्तु प्रकर्षेण रक्षन्तु । न केवलं दिवि स्थिता इन्द्राण्याद्याः किन्तु याः पार्थिवासः पृथिव्यां स्थिता देवपत्न्यः या अपि अन्याः अपांव्रते वृष्ट्युदकस्थानत्वेनोपलक्षिते ऽन्तरिक्षे वर्तन्ते ताः सर्वा देवीः देव्यः सुहवाः सुखेनाह्वातुं शक्या यूयं नोऽस्मभ्यं शर्म सुखं यच्छत दत्त । (ऋ०सं०४।१।२८)

य' इति प्रेष्य 'अस्तु श्रौ३षट्' इति अग्नीधा उक्ते 'देवानां पत्नीर्यज' इति होतारं प्रेष्य—

(१) "ॐ ये३यजामहे देवानां पत्नीरुशतीर्ग्ना व्यन्तु देवपत्नीरिन्द्राण्यग्नाय्यश्विनी राट्। आ रोदसी वरुणानी शृणोतु व्यन्तु देवीर्य ऋतुर्जनीनां३ वौ३षट्" इति होत्रा याज्यायां (का० हौ० प० १ । १०) पठितायाम्—

"ॐ इदं देवानां पत्नीभ्यो न मम" इति यजमानेन त्यागे कृते जुहुयात् ।

ततः अन्तर्धानकटं हस्तेनापनीय त्यक्तान्वारम्भः अध्वर्युः 'अग्नये गृहपतयेऽनुब्रू३हि' इति होतारं प्रेषयेत् । ततो होता—

(२) "ॐ अग्निर्होता गृहपतिः स राजा विश्वा वेद जनिमा जातवेदाः । देवानामुत यो मर्त्यानां यजिष्ठः स प्रयजतामृतावो३म्" इति पुरोऽनुवाक्यां ( का० हौ० प० १ । १० ) पठेत् ।

---

(१) देवपत्नीयाज्यामन्त्रार्थः ।

उत ग्ना व्यन्त्विति । उत अपिच ग्नाः छन्दोदेवता गायत्र्याद्यो देवपत्नीः देवपत्न्यः व्यन्तु इदं हविरश्नन्तु । इन्द्रस्य पत्नीन्द्राणी, अग्नेः पत्न्यग्नायी, अश्विनोः पत्न्याश्विनी, राज्ञः सोमस्य पत्नी राट् , रुद्रस्य पत्नी रोदसी, वरुणस्य पत्नी वरुणानी, एतासामेकैका विज्ञापनामस्मदीयाम् आशृणोतु । जनीनामिन्द्राण्यादीनां य ऋतुः कालविशेषो भोजनायोचितस्तस्मिन् काले व्यन्तु अश्नन्तु । सोमत्वष्ट्रोः पुरुषयोर्भुक्तवतोः सतोः पश्चाद् भुञ्जतामित्यर्थः । (ऋ०सं०४ २।२८)

(२) गृहपतेरग्नेः पुरोऽनुवाक्यामन्त्रार्थः ।

अग्निर्होतेति । अयमग्निः होता देवानामाह्वाता गृहपतिः गृहाणां पालकः सच राजा दीप्यमानः तादृशो जातवेदाः देवतानां विश्वा विश्वानि जनिमा जन्मानि वेद । उत अपिच यो जातवेदा मर्त्यानां जन्मानि वेद सः प्रयजतां प्रकर्षेण यागं कुर्वतां मध्ये यजिष्ठः अतिशयेन यष्टृतमः, ऋतावा सत्यवाक् च । ( ऋ० सं० ४ । ५ । १९ )

अध्वर्युश्च पूर्ववत्स्थालीतः आज्यं गृहीत्वा 'ओ३ श्रा३-वय' इति प्रेष्य 'अस्तु श्रौ३षट्' इति अग्नीधा उक्ते 'अग्निं गृहपतिं यज' इति होतारं प्रेष्य—

(१)"ॐ॑ये॒यजामहेऽग्निं गृहपतिꣳ हव्यवाडग्नि-रजरः पिता नो विभुर्विभावा सुदृशीको अस्मे। सुगा-र्हपत्याः समिषो दिदीह्यस्मद्र्यक् संमिमीहि श्रवा-ꣳसि३ श्रौ३षट्"इति होत्रा याज्यायां पठितायाम्—

'ॐ इदमग्नये गृहपतये न मम'इति यजमानेन त्यागे कृते किञ्चित् जुह्वां शेषयन् हुत्वा स्रुचं भूमौ निदध्यात्।

ततः इडापात्र्यां स्रुवेण पञ्चकृत्वः स्थालीत आज्यमवदाय प्राङ्मुखो होत्रे इडां प्रदाय इडां हस्तेन स्पृशन्नेव होतारं पत्नीं वा प्रदक्षिणीकृत्य होतुः पुरस्तात् प्रत्यङ्मुख उपविश्य होत्रा अर्पितामिडां प्रतिगृह्य इडायाः सकाशात् स्रुवेणाज्यमवदाय होतुरङ्गुलिपर्वणी उत्तममध्यमे स्रुवेण अञ्ज्यात्।

होता च उत्तरपर्वणोत्तरोष्ठम् अधरपर्वणाऽधरोष्ठं पूर्ववत्समन्त्रं निलिम्पेत्।

ततो होतुर्हस्तेऽध्वर्युः इडात एव स्रुवेण आज्यं चतुर्वारमव

---

(१) गृहपतेरग्नेर्याज्यामन्त्रार्थः।

हव्यवाडग्निरिति। अयमग्निः हव्यं वहतीति हव्यवाट् अजरः जरा-रहितः नः अस्माकं पिता पालयिता विभुः व्यापकः विभावा विशे-षेण भानशीलः सुदृशीकः सुखदर्शनः ईदृशो योऽग्निः स त्वम् अस्मे अस्मभ्यम् इषः अन्नानि संदिदीहि सम्यक् प्रयच्छ। कथंभूताः इषः। सुगार्हपत्याः शोभनगृहपतित्वहेतुभूताः।किञ्च अस्मद्र्यक् अस्मदभि-मुख्येन आगतः सन् श्रवांसि श्रोतव्यानि यशांसि संमिमीहि सम्य-क् निष्पादय। ( ऋ० सं० ३। ८। १८)

पत्नीसंयाजाश्च यावदुक्तं निवर्तन्ते अर्थकर्मत्वात्।

धेत् । पश्चमं च होता स्वयमेव गृहीत्वा अप्रसारिताभिरमुष्टिकृताभिरङ्गुलिभिरिडां मुखमात्रे देशे धारयित्वा सर्वैर्ऋत्विग्भिः यजमानेन च अन्वारब्धः इडामुपह्वयेत् । तत्र—

"उपहूतोऽयं यजमानः" इत्याद्यस्य स्थाने "उपहूतेयं पत्न्युत्तरस्यां देवयज्यायामुपहूता भूयसि हविष्करणउपहूता देवा मइदꣳ हविर्जुषन्तामिति तस्मिन्नुपहूता" इति पठेत् ।

अस्मिन्नेवावसरे 'मयीदम्' इति मन्त्रं सस्वरं यजमानो जपेत् ।

ततस्सर्वे प्रणीतोत्करावन्तरेण निष्क्रम्य इडां भक्षयित्वा पुनस्तथैवागत्य वेदेः पश्चिमभागे उपविश्य ब्रह्मादिक्रमेण दर्भैरुदकमादाय "ॐसुमित्रिया न आप ओषधयः सन्तु" इति मार्जयेरन् । ततस्सर्वे यथास्थानमुपविशेयुः ।

अध्वर्युः गार्हपत्यस्य उत्तरत उपविश्य स्रुक्स्रुवं प्रगृह्य—

"ॐ अग्नेऽदब्धायोऽशीतम पाहि मा दिद्योः पाहि प्रसित्यै पाहि दुरिष्ट्यै पाहि दुरद्मन्या आविषं नः पितुं कृणु । सुषदा योनौ स्वाहा ब्वाट्" इति—

मन्त्रेण ( य० सं० २ । २० )

'ॐ इदमग्नयेऽदब्धायवेऽशीतमाय न मम' इति यजमानेन त्यागे कृते स्रुक्स्रुवाभ्यां संस्रवान् गार्हपत्ये जुहुयात्(१)।

ततो गार्हपत्यदक्षिणाग्न्योरन्तरतो बहिर्निष्क्रम्य अपदक्षिणं गार्हपत्यं परीत्य दक्षिणाग्नेरुत्तरत उपविश्य स्रुवेण सकृज्जुहुयात्-

(१) संस्रवहोमस्य पत्नीसंयाजशेषत्वात् यावदुक्ते पत्नीसंयाजनिवृत्तौ अस्यापि निवृत्तिः । पशौ पत्नीसंयाजानां जाघनीकरणकत्वात्तत्र संस्रवरूपप्रतिपाद्यद्रव्याभावान्नास्य प्रवृत्तिः । प्रतिपत्तिकर्मत्वात् ।

ज्यं गृहीत्वा वेदोपग्रहपूर्वकम् "ॐ अग्नये संवेशपतय स्वाहा" इति मन्त्रेण ( य० सं० २। २० )

"ॐ इदमग्नये संवेशपतये न मम" इति यजमानकर्तृकत्यागान्ते दक्षिणाग्नौ जुहूयात्। पुनस्तथैवाज्यं गृहीत्वा "ॐ सरस्वत्यै यशोभगिन्यै स्वाहा" इति मन्त्रेण-( य० सं० २। २० )

'ॐ इदं' सरस्वत्यै यशोभगिन्यै न मम' इति त्यागान्ते तत्रैव जुहुयात्(१)।

ततः पिष्टलेपान् जुह्वां गृहीत्वा स्फ्योपग्रहपूर्वकम्—

"ॐ उलूखले मुसले यच्च शूर्पआशिश्लेष दृषदि यत्कपाले। उत्प्रुषो विप्रुषः संजुहोमि सत्याः सन्तु यजमानस्य कामाः स्वाहा" इति मन्त्रेण (का० श्रौ० ३। ७। १६ ) तान्—

'ॐ इदमग्नये न मम' इति त्यागान्ते दक्षिणाग्नावेव जुहुयात्(२)।

ततः पत्नी "ॐ वेदोऽसि येन त्वं देव व्वेद देवेभ्यो व्वेदो भवस्तेन मह्यं वेदो भूयाः" इति मन्त्रेण ( य० सं० २। २१ ) वेदं मुञ्चेत्। ततः योक्त्रम् "ॐ प्र मा मुञ्चामि व्वरुणस्य पाशाद्येन माऽबध्नात्सविता सुशेवः। ऋतस्य योनौ सुकृतस्य लोकेऽरिष्टां मा सह पत्या दधातु" इति मन्त्रेण ( का० श्रौ० ३। ८। २ )

---

(१) अस्यार्थकर्मत्वाद्यावद्युक्रान्तापच्छिन्नयोरप्रवृत्तिः।

(२) पिष्टलेपानां प्रतिपाद्यत्वादस्य, प्रतिपत्तिकर्मत्वात् इडान्तेऽपि प्रवृत्तिः। अस्मिन् होमे अग्नेर्देवतात्वं प्रकृतौ विकृतौ चेति सिद्धान्तितं कर्काचार्यैः।

सैव मुञ्चेत् ।

ततो होता गार्हपत्यस्य उत्तरत आरभ्य वेदेः पूर्वान्तं यावत् वेदं स्तृणीयात् । तत आहवनीये समिधमाधाय प्रणीतोत्करावन्तरेण बहिर्निष्क्रामेत् ।

ततोऽध्वर्युः ध्रौवमाज्यं विलाप्य जुहां गृहीत्वा स्तृतबर्हिषः सकाशात् सव्ये पाणौ कुशमुष्टिं गृहीत्वा उपविश्यैव "ॐदेवा गातुविदो गातुं वित्त्वा गातुमित । मनसस्पतऽइमं देव यज्ञꣳ स्वाहा वाते धाः" इति मन्त्रेण ( यं० सं० २ । २१ ) सामिष्टयजुःसंज्ञकं होमम्—

"ॐइदं वाताय न मम"इति त्यागान्ते आहवनीये कुर्यात्(१) । ततः सर्वाणि बर्हींषि जुह्वामवधाय "ॐसं बर्हिरङ्क्ताꣳ हविषा घृतेन समादित्यैर्वसुभिः सं मरुद्भिः । समिन्द्रो विश्वदेवेभिरङ्क्तां दिव्यं नभो गच्छतु यत् स्वाहा" इति मन्त्रेण (य० सं० २ । २२)

"ॐइदं दिव्याय नभसे न मम"इति त्यागान्ते तत्रैव जुहुयात्(२) ।

ततः आग्नीध्रः इध्मसंनहनान्यादाय स्फ्योपग्रहपूर्वकम् "ॐरुद्राय पशुपतये स्वाहा" इति मन्त्रेण "ॐ इदꣳ रुद्राय पशुपतये न मम" इतित्यागान्ते तत्रैव जुहुयात् ।

ततः अध्वर्युः प्रणीताः वेदिमध्ये आसाद्य आहवनीयं प्रदक्षिणीकृत्य वेदिमध्ये उदङ्मुख उपविष्टः प्रणीताः अपः वेद्याम् "ॐक-

(१) अर्थकर्मत्वादस्य अन्तापच्छिन्नादौ अप्रवृत्तिः । अत्र होमे वातस्य देवतात्वमिति कर्कभाष्ये स्पष्टम् ।

(२) बर्हिषां चरितार्थत्वात् बर्हिर्होमः प्रतिपत्तिः । ततश्च अन्तापच्छिन्न प्रवृत्तिर्भवत्येव ।

स्त्वा विमुञ्चति स त्वा विमुञ्चति कस्मै त्वा विमुञ्चति तस्मै त्वा विमुञ्चति । पोषाय"(य०सं० २ । २३)–(निनयामि ) इति मन्त्रेण निनयेत् । (अधः पातयेदित्यर्थः) । ( एष दार्शपौर्णमासिकोऽवभृथः ) । ( प्रणीतानिनयनं प्रतिपत्तिश्चरितार्थत्वात् )

ततः अप्रदक्षिणं प्रत्यागच्छति । ततः फलीकरणानन्तरं स्थापितान् कणान् प्रथमकपाले निधाय उत्करस्योपरि समीपे एव कृष्णाजिनं सव्येन धारयन् कृष्णाजिनस्याधस्तात् उत्करे कपालेनैव "ॐरक्षसां भागोऽसि" इति मन्त्रेण( य० सं० २ । २३ ) प्रक्षिपेत् । ( नात्रोदकस्पर्शः । चतुर्थीनिर्देशाभावेन रक्षसां देवतात्वाभावात् , जुहोत्युपदेशाभावाच्च) ।

( चर्विष्टौ पुरोडाशकपालाभावेऽपि कपालमात्रमुपादेयम् । कणोपासने करणत्वश्रवणात् इति बोध्यम् )

ततोऽध्वर्युः आहवनीयं प्रदक्षिणीकृत्य पूर्णपात्रमादाय दक्षिणत उपविष्ट उत्तराभिमुखः यजमानस्याञ्जलौ पूर्णपात्रं निनयेत् ( तत्स्थं जलमञ्जलौ क्षिपेदित्यर्थः ) । अञ्जलौ प्रक्षेपश्च तथा कार्यः यथा यजमानस्य "संवर्चसा" इतिमन्त्रपाठान्ते भवेत् ।

ततोऽध्वर्युणा निनीयमानं पूर्णपात्रं यजमानोऽञ्जलिना "ॐसंवर्चसा पयसा सन्तनूभिरगन्महि मनसा सꣳशिवेन । त्वष्टा सुदत्रो विदधातु रायोऽनुमार्ष्टु तन्वो यद्विलिष्टम्"( य० सं० २ । २४ )

इति मन्त्रेण (१)प्रतिगृह्य तूष्णीं मुखं विमृज्यात्(शोधयेदित्यर्थः)।

(१) पूर्णपात्रजलग्रहणस्य यजमानकर्तृकस्य प्राधान्यात् द्वादशाहे सर्वयजमानैर्ग्राह्यत्वम् । अस्य पदार्थत्वात् अन्तापच्छेदे निवृत्तिः ।

ततो यजमान उत्थाय दक्षिणवेदिश्रोणेरारभ्य आहवनीयादर्वाक् 'दिवि विष्णुः' इत्यादिभिः प्रतिमन्त्रं विष्णुक्रमान् प्राचः क्रमते । तत्र पूर्वं दक्षिणपादेन—

"ॐ दिवि विष्णुर्व्यक्रंस्त जागतेन च्छन्दसा ततो निर्भक्तो योऽस्मान् द्वेष्टि यं च वयं द्विष्मः" इति मन्त्रेण ( य० सं० २ । २५ ) दक्षिणे वेद्यन्ते प्राच्यां क्रामेत्, सव्यं पादं ततोऽर्वागेव स्थापयेत् । ततः "ॐ अन्तरिक्षे विष्णुर्व्यक्रंस्त त्रैष्टुभेन च्छन्दसा ततो निर्भक्तो योऽस्मान् द्वेष्टि यं च वयं द्विष्मः" इति मन्त्रेण (य० सं०२ । २५)ततः प्राच्यां दक्षिणपादेनैव द्वितीयं क्रामेत् ।

ततः "ॐ पृथिव्यां विष्णुर्व्यक्रंस्त गायत्रेण च्छन्दसा ततो निर्भक्तो योऽस्मान् द्वेष्टि यं च वयं द्विष्मः" इति मन्त्रेण(य०सं०२।२५)ततोऽपि प्राच्यां तृतीयं तथैव क्रामेत् । क्रामता आहवनीयस्यातिक्रमणं न कर्तव्यम् ।

( विष्णुक्रमणं च पदार्थः । अतोऽन्तापाच्छिन्ने निवृत्तिः )

ततः "ॐ अस्माद्न्नान्निर्भक्तो योऽस्मान् द्वेष्टि यं च वयं द्विष्मः" इति मन्त्रेण (य० सं० २ । २५) यजमानः स्वं भागमवेक्षेत(१) । ततः "ॐ अस्यै प्रतिष्ठायास्त-

(१) भागसंस्कारत्वाच्चान्तलुप्तेऽपि भागेक्षणस्य प्रवृत्तिः । "अस्मादन्नात्" इति भागेक्षणमन्त्रे निर्भक्त इत्यादि "अस्यै प्रतिष्ठायाः" इति भूमीक्षणमन्त्रे च ततोनिर्भक्त इत्यादि अनुषज्यते ।

"कस्त्वा विमुञ्चति" इत्यादिप्रणीतानिनयनमन्त्रेतु 'निनयामि' इति लौकिकमध्याह्रियते । यत्रानुषङ्गस्तत्राव्यवधानेन प्रयोगः । यत्र तु अध्याहारस्तत्र व्यवधानेन । किंच अनुषङ्गविनाशे श्रौतं प्रायश्चित्तम् अध्याहारविनाशेतु स्मार्तम् । इदं च "उत्तराघारमाघार्य पशुं पूर्वः समनक्ति" (का० श्रौ० ६ । ४ । २) इति सूत्रे कर्कभाष्ये स्पष्टम् ।

तो निर्भक्तो योऽस्मान् द्वेष्टि यं च वयं द्विष्मः"
इति मन्त्रेण ( य० सं० २ । २५ ) भूमिमवेक्षेत । ततः
"ॐअगन्म स्वः" इति मन्त्रेण ( य० सं० २ । २५ ) प्राचीं
दिशमवेक्षेत(१) । ततः "ॐसं ज्योतिषाऽभूम" इति मन्त्रेण
( य० सं० २ । २५ ) आहवनीयमीक्षेत । ततः "ॐस्वयं-
भूरसि श्रेष्ठो रश्मिर्वर्चोदा असि वर्चो मे देहि" इति
मन्त्रेण(य०सं०२।२६) सूर्यमीक्षेत । ततः "ॐसूर्यस्यावृतम-
न्वावर्ते" इति मन्त्रेण ( य० सं० २ । २६ ) प्रदक्षिणमावर्तेत
( भ्राम्येत् ) । (नात्रेतरथाऽऽवृत्तिः । सूत्रे प्रदक्षिणग्रहणात् ) ।

ततः "ॐअग्ने गृहपते सुगृहपतिस्त्वयाऽग्नेऽहं गृ-
हपतिना भूयासᳬ सुगृहपतिस्त्वं मयाऽग्ने गृहपतिना
भूयाः । अस्थूरि णौ गार्हपत्यानि सन्तु शतᳬ हिमाः"
इति मन्त्रेण(य०सं०२।२७) गार्हपत्यमुपातिष्ठेत । (इदमप्यर्थकर्म)

ततः "ॐसूर्यस्यावृतमन्वावर्ते" इति मन्त्रेण (य० सं०
२ । २७) प्रदक्षिणमावर्तेत ।

ततः "ॐउरु विष्णो विक्रमस्वोरुक्षयाय नस्कृधि ।
घृतं घृतयोने पिब प्रप्र यज्ञपतिं तिर स्वाहा" इति म-
न्त्रेण ( य० सं० ५ । ३८ ) गार्हपत्यात्प्राच्यां गच्छेत् ।

ततो वेदिमध्ये उपविष्टः यजमानः "ॐततोऽसि तन्तुर-
स्यनुमा तनुह्यस्मिन्यज्ञे स्याᳬ साधुकृत्यायामस्मि-
न्नन्ने ऽस्मिंल्लोक इदं मे कर्मेदं वीर्यं ( पुत्रनाम गृहीत्वा )
अमुकशर्मा पुत्रोऽनुसंतनोतु" इति (का० श्रौ० ३ । ८ । २२)

---

(१) प्राचीक्षणमर्थकर्म । अतोऽन्तापच्छिन्ने निवृत्तिः । एवमाहव-
नीयेक्षणं सूर्यावेक्षणं च अर्थकर्मैव । अतस्तयोरपि अन्तलोपे नि-

आशिषः प्रार्थयेत्। पुत्राभावे आत्मनाम निर्दिश्यैव आशिषः प्रार्थयेत अमुकशर्मेत्येवम्।

( 'अमुकशर्माऽहमनुसंतनवानि' इत्येवं प्रार्थनमिति हरिस्वामिनः )

तत उत्थाय तूष्णीमाहवनीयमुपस्थाय "ॐअग्ने व्रतपते व्रतमचारिषं तदशकं तन्मेऽराधि" इति मन्त्रेण व्रतं विसृजेत्। तदनन्तरं पूर्वेणाहवनीयं गत्वा दक्षिणाग्नेरुत्तरेण गत्वा गार्हपत्यदक्षिणाग्न्योरन्तरालेन निष्क्रामेत्। ततः "ॐसं यज्ञपतिराशिषा" इति मन्त्रेण स्वं भागं प्राश्नीयात्। (व्रतविसर्ग–भागप्राशनयोरन्तापच्छिन्नेऽपि प्रवृत्तिः प्रतिपत्तिरूपत्वात्)

प्रोषिते यजमाने "ॐअहं त्वदस्मि मदसि त्वमेतन्मम त्वं योनिस्तव योनिरस्मि। ममैव सन्दिवि देवेष्वधि पुत्रः पित्र्ये लोककृज्जातवेदः स्वाहा" ( का० श्रौ० ३। ६। ११) इदं जातवेदसे न मम इति मन्त्रेण अध्वर्युः यजमानभागं हस्तेन आहवनीये जुहुयात्।

ततोऽध्वर्युणा स्फ्यं हस्ते गृहीत्वा "ब्राह्मणं तर्पयितवै" इत्युक्ते यजमानः 'अस्याः पौर्णमासेष्टेः ( दर्शेष्टेः ) समृद्ध्यर्थं श्रुत्युक्तमेकं ब्राह्मणं भोजयिष्ये। तेन श्रीयज्ञपुरुषः प्रीयतां न मम' इति संकल्पयेत्।

ततो ब्रह्मा "ॐनमः कृताय कर्मणे अकृताय कर्मणे नमः। अयाड् यज्ञं जातवेदा अन्तरः पूर्वो अस्मिन्निषद्य सन्वः सनिः सुविमुञ्चाविमुञ्च धेह्यस्मभ्यं द्रविणं जातवेदः स्वाहा" इति मन्त्रेण ( का० श्रौ० २। २। २१ ) आहवनीये कर्मापवर्गसमिधमादधाति।

( समिदाधानं पदार्थः। अतः यावदुक्तादिषु निवर्तते। )

ततो यजमानः 'यथाशक्ति ब्राह्मणान् भोजयिष्ये तेन श्रीयज्ञपुरुषः प्रीयतां न मम' इति ब्रूयात्।

ॐ नहैष यज्ञ उवाच नग्नताया वै बिभेमीति का ते नग्नतेति अभित एव मा परिस्तृणीयुरिति तस्मादेतदग्निमभितः परिस्तृणन्ति तृष्णाया वै बिभेमीति का ते तृप्तिरिति ब्राह्मणस्य वै तृप्तिमनुतृप्येयमिति।

तस्मात्सꣳस्थिते यज्ञे ब्राह्मणं तर्पयितवै ब्रूयाद्यज्ञमेवैतत्तर्पयति। यत्कर्मणाऽत्यरीरिचं यद्वा न्यूनमिहाकरम्। अग्निष्टत् स्विष्टकृद्विद्वान् स्विष्टꣳ सुहुतं करोतु स्वाहा। चतुर्भिश्च चतुर्भिश्च। प्रमादात्कुर्वतां कर्म०।

नमस्ते गार्हपत्याय नमस्ते दक्षिणाग्नये।
नम आहवनीयाय महावेद्यै नमोनमः॥
नमः सभ्यावसथ्याभ्यां नमस्ते यज्ञमूर्तये।

यस्यस्मृत्येति० कायेनवाचेति च पठित्वा अनेन यथाज्ञानकृतेन पौर्णमासेष्ट्याख्येन (दर्शेष्ट्याख्येन) कर्मणा श्रीभगवान् यज्ञपुरुषः प्रीयतां न मम ॐ तत्सत् नारायणार्पणमस्तु इति वदेत्

इति कर्कानुसारी दर्शपूर्णमासप्रयोगः।

अथ सोमयाजिनो नियमेन सान्नाय्यवती दर्शेष्टिः।

तत्र चतुर्दश्यां सायं पयसाऽग्निहोत्रहोमं कृत्वा शेषभूतं पयः दध्यादिना संयोज्य उत्तरेद्युः आतञ्चनार्थं स्थापयेत्। "उद्वास्यातनक्ति प्राग्घुतशेषेण" इतिसूत्रस्वरसात् (१)। (का० श्रौ० ४। २। ३३)

(१) कर्कोपाध्यायो हि "उद्वास्यातनक्ति प्राग्घुतशेषेण" इति सूत्रं "प्रातर्हुतशेषेणेति संप्रदायः। नेत्यपरे। तदा प्रातर्हुतशेषेणेत्ये-

किंच तत्र इष्टिपूर्वदिवसे सान्नायवद्दर्शेष्ट्या श्वो यक्ष्ये इति यजमानस्य संकल्पः। आहवनीयदक्षिणाग्न्योर्विहरणानन्तरं यजमानः षट् समिधो गृहीत्वा स्रुयं सव्यहस्ते धृत्वा अग्निमष्टाकपालेन पुरोडाशेन, अग्नीषोमावन्तराऽऽज्येन उपांशु, इन्द्रं सान्नाय्येन ( दध्ना पयसा च ) श्वोऽहं यक्ष्ये इति संकल्प्य 'पञ्चदशो वज्र' इत्यादि व्रतोपायनीयाशनान्तं कुर्यात्। अनन्तरमध्वर्युः प्राचीमुदीचीं प्रागुदीचीं वा पलाशशाखां शमीशाखां वा अशुष्काग्राम् "ॐ इषे त्वा" (य० सं१। १) (छिनद्मि) इति मन्त्रेण छिनत्ति। "ॐ ऊर्जे त्वा" (य० सं० १। १) (संनमयामि) इति मन्त्रेण अनुमार्ष्टि। ( अनुमार्जनं च शाखास्थपर्णादिपातनम् )। अनन्तरमस्मिन्नेवावसरे यजमानः "अग्ने व्रतपते" इति व्रतमुपेयात् कालान्तरे वा।

ततः अध्वर्युः शाखामादाय यजमानस्य षड्भिर्गोभिः सह षड्वत्सान् संसृज्य तान् वत्सान् प्रत्येकं "वायव स्थ"(य०सं० १।१) इति मन्त्रेण तया शाखया उपस्पृश्य गोभ्यो वियोजयेत्।

---

वावक्ष्यत्। अतः प्राक्शब्दस्य पूर्वकालवाचित्वात्पूर्वं यद्धुतशेषं सायंहोमशेषमित्यर्थः" इति व्याख्याय सायंहोमशेषग्रहणस्य दृढीकरणाय पुनराह "आतनक्तीति आतञ्चे रूपम्। स च संकोचनार्थः। संकोचः काठिन्यं, तत् सायंहोमशेषेण सुकरमिति"। सायंहोमशेषभूतं हि पयः दध्यादियुक्तं सत् अहोरात्रात्मकेन कालेन कठिनीभावमापन्नम् अन्यस्य पयसः शीघ्रं कठिनीकरणाय प्रभवति। ननु प्रातर्हुतशेषभूतं पयः दध्यादियुक्तं सत् यामचतुष्टयमात्रेण सम्यक् कठिनीभावमापद्यते। येन तत् अन्यस्य शीघ्रं कठिनीकरणे समर्थं भवेत्। अतः सायंहोमशेषस्यैव ग्रहणमिति कर्काशयः। चतुर्दश्यां दध्नाऽग्निहोत्रहोमस्तु न कर्कसंमतः। नहि प्रातर्हुतशेषदध्यपेक्षया सायंहुतशेषदध्नः कठिनीकरणाय विशेषो भवितुमर्हति। येन दधिहोमाङ्गीकारे कर्कोक्तिः सङ्गच्छेतेति दिक्।

ततो मातॄणां गवां मध्ये एकां गाम्—

"ॐ देवा वः सविता प्रार्पयतु श्रेष्ठतमाय कर्मण आप्यायध्वमघ्न्या इन्द्राय(महेन्द्राय) भागं प्रजावतीरनमीवा अयक्ष्मा मा व स्तेन ईशत माऽघशꣳसो ध्रुवा अस्मिन् गोपतौ स्यात बह्वीः" इति मन्त्रेण (य० सं० १। १) शाखयोपस्पृशति। ततः अग्रे शाखार्थं प्रादेशमात्रं परित्यज्य शाखाया मूलदेशात्—

"ॐ वेषोऽस्युपवेषो द्विषतो ग्रीवा उपवेविड्ढि ध्वेशाँ २॥ अग्ने सुभग धारयेह। ऋद्धाः कर्मण्या अनपायिनो यथाऽसन्" इति मन्त्रेण(१) (का०श्रौ० ४। २१ १२) छित्त्वा उपवेषं करोति। ततः "ॐ वसोः पवित्रमसि" इति मन्त्रेण ( य० सं० १। २ ) शाखायां कुशद्वयरूपं पवित्रं बध्नाति। ततः "ॐ यजमानस्य पशून् पाहि" इति मन्त्रेण ( य० सं० १। १ ) अग्न्यगारस्य पुरस्तात् शाखामुपगूहति।

ततः सायं यजमानस्य यवाग्वा स्वयम् अग्निहोत्रहोमः।

ततः अध्वर्युः त्रैवर्णिकं दोग्धारम् "उपसृष्टां प्रब्रूतात्" इति प्रेष्यति।

ततो वत्सं संसृज्य 'उपसृष्टा' इति दोग्ध्रा प्रोक्ते अध्वर्युः "ॐ द्यौरसि पृथिव्यसि" इति मन्त्रेण ( य० सं० १। २ ) उखाम् ( स्थालीम् ) आददाति।

ततः "ॐ मातरिश्वनो घर्मोऽसि विश्वधा असि।

(१) अत्र मुद्रितसभाष्यश्रौतसूत्रपुस्तकेषु प्रमादात्—"वेषोऽसि"-इत्यादिर्मन्त्रः संपूर्णो न धृतः। लिखितसूत्रपुस्तकपर्यालोचनेन तु अस्माभिः का० श्रौतसूत्रस्थत्वेनोल्लिखितः इति बोध्यम्।

परमेण धाम्ना दृꣳहस्व मा ह्वार्मा ते यज्ञपतिर्ह्वार्षीत्–" इति मन्त्रेण ( य० सं० १ । २ ) गार्हपत्ये स्थालीमधिश्रयति । ततः "ॐ वसोः पवित्रमसि शतधारं वसोः पवित्रमसि सहस्रधारम्" इति मन्त्रेण ( य० सं० १ । ३ ) शाखापवित्रं स्थाल्यामुदगग्रं प्रागग्रं वा स्थापयति । ततो दोग्धारं 'गां धुक्ष्व' इति प्रेष्य वाग्यतोऽध्वर्युरवतिष्ठते । ततः स्थालीमन्वारब्धे यजमाने दोग्ध्रा काष्ठमयादिपात्रे गां दुग्ध्वा स्थाल्यामासिच्यमाने पयसि अध्वर्युः "ॐ देवस्त्वा सविता पुनातु वसोः पवित्रेण शतधारेण सुप्वा" इति मन्त्रं ( य० सं० १ । ३ ) जपति । ततः "ॐ कामधुक्षः" ( य० सं० १ । ३ ) इति पृच्छति दोग्धारम् । 'गङ्गाम्' इति दोग्ध्रा प्रोक्ते "ॐ सा विश्वायुः" इति ( य० सं १ । ४ ) अध्वर्युः प्राह ।

पुनरध्वर्युः 'गां धुक्ष्व' इति प्रेषयति । ततो दोग्धा द्वितीयां गां दुग्ध्वा यजमानेनान्वारब्धायां स्थाल्यां पवित्रस्योपरि दुग्धमासिञ्चति । तदाऽध्वर्युः "देवस्त्वा" इति जपति ।

ततः "कामधुक्षः" इति पृच्छति । ततः 'यमुनाम्' इति दोग्ध्रा प्रोक्ते "ॐ सा विश्वकर्मा" इति ( य० सं० १ । ४ ) अध्वर्युराह ।

पुनः 'गां धुक्ष्व' इति प्रैषः । तृतीयां गां दुग्ध्वा पूर्ववत् पयः स्थाल्यामासिञ्चति दोग्धा । "देवस्त्वा" इति अध्वर्युर्जपति । ततः "कामधुक्षः" इति पृच्छति । 'सरस्वतीम्' इति दोग्धा प्रत्याह । तदा "ॐ सा विश्वधायाः" इति (य०सं० १ । ४ ) अध्वर्युराह । अनन्तरं तिसृणां गवां दोहनं नित्यम् । अधिकानां पाक्षिकम् । अन्यासां तिसृणामधिकानां वा दोहने तु अध्वर्योर्वाग्यमः, यजमानस्य स्थाल्यन्वारम्भश्च न भवतः ।

सर्वदोहान्ते दोहनपात्रे किञ्चिज्जलं प्रक्षिप्य पात्रं प्रक्षाल्य तज्जलं स्थाल्यां दुग्धमध्ये-"ॐ संपृच्यध्वमृतावरीरूर्मिणा मधुमत्तमाः। पृञ्चनीर्मधुना पयो मन्द्रा धनस्य सातये"इति मन्त्रेण (का० श्रौ० ४।२।३२) अध्वर्युरासिञ्चति। ततः पयः श्रपयित्वा उद्वास्य चतुर्दश्यां सायंहुतशेषेण दधिभावमापादितेन"ॐ इन्द्रस्य त्वा भागꣳ सोमेनातनच्मि"इति मन्त्रेण(१)(य० सं० १।४) आतनक्ति। (काठिनीभवनार्थं तत्र प्रक्षिपतीत्यर्थः) ततः सोदकेन अमृन्मयेन पात्रेण उत्तानेन अपिदधाति "ॐ विष्णो हव्यꣳ रक्ष" इति मन्त्रेण (य० सं० १।४)। ततस्तूष्णीं शिक्यादौ तां स्थालीं निदधाति। ततः शाखया पूर्ववत् वत्सापाकरणं प्रातर्दोहार्थम्। अग्न्यगारस्य पुरस्ताच्छाखोपगूहनम्। यजमानस्य अग्न्यगारे शयनम्।

प्रातर्यजमानः स्वयमेव यवाग्वा अग्निहोत्रं हुत्वा सूर्ये अनुदिते एव ब्रह्मवरणं कुर्यात्। तत्र विशेषः—अमुकशर्मन् सान्नाय्यवत्या दर्शेष्ट्याऽहं यक्ष्ये इति। पात्रासादने विशेषः—अष्टावेव कपालानि। पवित्रासादनानन्तरं शाखोपवेषः। वेदानन्तरं (कुशमुष्टयनन्तरं) दोहनचतुष्टयम्। तच्च बन्धनरज्जुः, दोहनपात्रं, शाखापवित्रम्, उखा चेति। आज्यानन्तरं पुरोडाशपात्री एका।

देवस्यत्वेत्यनेन आग्नेयस्यैव हविषो निर्वापः।

आज्यनिर्वापवेदसंस्कारानन्तरम् 'उपसृष्टां मब्रूतात्'इत्यादिः पयसि प्रक्षालनजलप्रक्षेपान्तो दोहः। प्रातर्दोहश्च साय-

(१) "तद्धैके महेन्द्रायेति कुर्वन्ति" इति श्रुतेः पक्षे महेन्द्रस्य भावात् तदाश्रयणे "महेन्द्रस्य त्वा भागꣳ सोमेनातनच्मि" इति पाठ्यम्।

दोहपात्रादन्यपात्रे कर्तव्यः। सायंदोहमाहृत्य तस्य गार्हपत्यस्य पश्चिमतः स्थापनम्। आग्नेयपुरोडाशस्यैकत्वाद्विभागाभावेन तत्पूर्वकः "इदमग्नेः" इत्यालम्भोऽपि न प्रवर्तते। पुरोडाशाधिश्रयणानन्तरं तदुत्तरतः पयोऽधिश्रयणम्। पर्यग्निकरणस्य आज्यपुरोडाशसंयोगेन विधानात् पयसः पर्यग्निकरणाभावः। पुरोडाशं प्रातर्दोहं च श्रपयित्वा पुरोडाशविभस्मीकरणान्ते पात्रीं स्थापयित्वा तस्यामुपस्तीर्य अग्निष्ठं पुरोडाशं पयश्च अभिघार्य गार्हपत्यस्योत्तरतो निहितायां पात्र्यां पुरोडाशमुद्वास्य तदुत्तरतो दधि निधाय तदुत्तरतः पय उद्वासयेत्। ततः आग्नेयपुरोडाश-दधि-पयसां प्राणदानम्। प्राणदानमन्त्रेच दध्नि पयसि च "इन्द्रं ( महेन्द्रपक्षे महेन्द्रं ) गच्छ" इति विशेषः।

ततः कपालान्यभ्यज्योद्वास्य आज्यस्थाली-पुरोडाश-दधि-पयसां "प्रियेण धाम्ना" इति मन्त्रेण क्रमेणासादनम्। "ध्रुवा असदन्" इति मन्त्रेण आज्यस्थाल्यादीनामालम्भनम्। तत आत्मालम्भे उदकस्पर्शः।

होता आवाहने "अग्नीषोमौ" इत्युपांशु उक्त्वा "आ३वह इन्द्रमा३वह" इत्यादि ब्रूयात्। उत्तमे प्रयाजे "स्वाहाऽग्निꣳस्वाहा" इत्यनन्तरम् "अग्नीषोमौ" इत्युपांशु उक्त्वा उच्चैः "स्वाहेन्द्रꣳस्वाहा" इत्यादि ब्रूयात्।

उत्तमप्रयाजे त्यागश्च "ॐइदमग्नये सोमायाग्नयेऽग्नीषोमाभ्यामिन्द्राय देवेभ्य आज्यपेभ्यो न मम" इति यजमानेन कार्यः।

आग्नेययागानन्तरमग्नीषोमीय उपांशुयागः।

ततोऽध्वर्युः 'इन्द्रायानुब्रूहि' इति होतारं प्रेषयेत्।

ततो होता(१) "ॐएन्द्र सानसिꣳ रयिꣳ सजित्वानꣳ सदासहम्। वर्षिष्ठमूतये भरो३म्" इत्यनुवाक्यां पठेत् (का० हौ० प० २।९)।

ततोऽध्वर्युः जुह्वामुपस्तीर्य प्रथमं पयसो मध्यात्पूर्वार्धाच्च द्विरवदाय ततो दध्नस्तथैव द्विरवदाय उपरि सकृदभिघार्य दधिपयसोः प्रत्यभिघारणं कृत्वा अतिक्रम्याश्राव्य 'इन्द्रं यज' इति होतारं प्रेषयेत्।

होत्राच "ॐये३यजामहइन्द्रं(२) प्रससाहिषे पुरुहूत शत्रून् ज्येष्ठस्ते शुष्म इह रातिरस्तु। इन्द्राभर दक्षिणेना वसूनि पतिः सिन्धूनामसि रेवतीनां३ वौ३षट्" इति याज्यायां पठितायाम् अध्वर्युर्जुहुयात्तन्त्रेण।

---

(१) ऋ० सं० १।१।१५ अस्या अर्थः। हे इन्द्र ऊतये अस्मद्रक्षार्थं सानसिं सम्भजनीयं सजित्वानं समानशत्रुजयशीलं सदासहं सर्वदा शत्रूणामभिभवहेतुं वर्षिष्ठम् अतिशयेन वृद्धं प्रभूतं रयिं धनम् आभर आहरेति। एन्द्रेत्याङः भरेत्यत्र सम्बन्धः।

महेन्द्रपक्षे "महाँ २॥ इन्द्रो य ओजसा पर्जन्यो वृष्टिमाँ २॥ इव। स्तोमैर्वत्सस्य वावृधो३म्" इत्यनुवाक्यां (य०सं० ७।४०) पठेत्।

(२) ऋक्सं०८।८।३८ अस्या अर्थः। हेपुरुहूत बहुभिराहूतेन्द्र शत्रून् वैरिणः प्रससाहिषे प्रकर्षेण अभिभवसि। ते तव शुष्मः शोषकं बलं ज्येष्ठः प्रशस्यतमं वृद्धतमं वा भवति। इह अस्मिन् कर्मणि रातिस्तव दानम् अस्तु अस्मभ्यं भवतु। तदर्थं हेइन्द्र दक्षिणेना=दक्षिणेन हस्तेन वसूनि धनानि आभर=आहर आनय। त्वं रेवतीनां रयिमतीनां बहुधनानां सिन्धूनां स्यन्दनशीलानां नदीनां पतिरसि स्वामी भवसि॥

महेन्द्रपक्षे "महां २॥ इन्द्रो नृवदाचर्षणिप्रा उत द्विबर्हा अमिनः सहोभिः। अस्मद्र्यग्वावृधे वीर्यायोरुः पृथुः सुकृतः कर्तृभिर्भूत्" इति याज्या बोध्या। ( य० सं० ७। ३९ )

ॐइदमिन्द्राय न ममेति यजमानस्त्यागं कुर्यात् ।

होता स्विष्टकृन्निगदे "अग्नेः प्रिया धामान्ययाट्" इत्यनन्तरम् "अग्नीषोमयोः" इत्युपांशूक्त्वा उच्चैः "प्रिया धामान्ययाडिन्द्रस्य प्रिया धामानि" इत्यादि ब्रूयात् ।

(प्राशित्रमिडा च दधिपयसोः प्रवर्तेते । द्रव्यसंस्कारत्वात् । षड्वत्तादिभागाश्चतुर्धाकरणं च पुरोडाशसंयोगेन श्रवणात् न दधिपयसोर्भवन्ति । )

शाखापवित्रेण समस्य ऐष्टिकपवित्राभ्यां मार्जनम् । ततः शाखापवित्रं शाखायामेव स्थापनीयं, न तु प्रस्तरे । मार्जनमात्रे एव श्रवणात् । स्रुग्व्यूहने "अग्नेरग्नीषोमयोरिन्द्रस्योज्जितिमनूज्जयत्वयं यजमान" इति "अग्निरग्नीषोमाविन्द्रस्तमपनुदन्तु यमयं यजमान" इति च अध्वर्युर्ब्रूयात् ।

सूक्तवाके होता "अग्निरिदꣳ हविरजुषतावीवृधत महो ज्यायोऽकृत" इत्यनन्तरम् "अग्नीषोमौ" इत्युपांशूक्त्वा "इदꣳ हविरजुषेताम्" इत्यादि पौर्णमासवदुक्त्वा उच्चैः "इन्द्र इदꣳ हविरजुषत" इत्यादि पठेत् ।

सह शाखया प्रस्तरानुप्रहरणमाहवनीये । अध्वर्युणा परिधिषु हूयमानेषु अग्नीत् "ॐजुहोमि त्वा सुभग सौभगाय पुरुतमं पुरुहूत श्रवस्यन्त्स्वाहा" इति मन्त्रेण ( का० श्रौ० ४ । २ । ४३ ) उपविश्योपवेषं जुहुयात् ।

"ॐइदꣳ सौभगाय न मम" इति यजमानस्त्यागं कुर्यात् ।

इति सान्नाय्यवद्दर्शेष्टिप्रयोगः ।

अथ सन्नयतोऽसन्नयतश्च अमायाम् अपराह्णे-
पिण्डपितृयज्ञः।

तत्र देशकालकीर्तनान्ते कृताऽपसव्यो यजमानः नीवीं बध्वा दक्षिणाऽभिमुखः परमेश्वरप्रीतये पिण्डपितृयज्ञेनाऽहं यक्ष्ये इति संकल्पयेत्। ततोऽग्निमपरेण उत्तरेण वा पात्रासादनम्। अपरेण रेखाकरणम्। "एतत्ते" इति पिण्डदानम्। सूत्राण्याच्छादनानि। एतान्वैकल्पिकपदार्थानहं करिष्ये इति वैकल्पिकावधारणम्। ततोऽध्वर्युः अग्निं कव्यवाहनं सोमं पितृमन्तं चरुणा, अमुकगोत्रम् अमुकशर्माणं यजमानपितरम् अमुकशर्माणं यजमानपितामहम् अमुकशर्माणम् यजमानप्रपितामहं चरुशेषपिण्डैरहं यक्ष्यामि (यक्ष्ये) इत्युल्लिखेत्। (यजमानस्य स्वयं कर्तृत्वे तु अस्मत्पितरम् अस्मत्पितामहम् अस्मत्प्रपितामहम् इति प्रयोगः। सति संभवे अध्वर्युकर्तृकत्वमेव "यजमानस्य पितृप्रभृतिस्त्रीन्" (का० श्रौ० ४।१।१०) इतिसूत्रस्वरससिद्धम्)।

ततोऽध्वर्युर्यजमानो वा दक्षिणाग्निमाग्नेयकोणाद्दक्षिणसंस्थमप्रदक्षिणं दक्षिणाग्रैर्दर्भैः परिस्तीर्य पात्रासादनमेकशः कुर्यात्–दक्षिणाग्निमपरेण प्रागग्रं दक्षिणबिलं दक्षिणसंस्थं पात्रं स्रुचंवा, उलूखलं, मुसलं, शूर्पं, चरुपात्रम्, उदकम्, आज्यं, मेक्षणं, स्फ्यम्, उदपात्रं, सकृदाच्छिन्नानि, व्रीहीन्, सूत्राणि चेति।

ततो गार्हपत्यमपरेण दक्षिणाभिमुखः उपविश्य स्रुचि स्थाल्यां वा अपूर्णं व्रीहीन् तूष्णीं गृहीत्वा दक्षिणाग्निमुत्तरेणोलूखले दक्षिणाभिमुखस्त्रिरवहन्ति। शूर्पे कृत्वा निष्पूय सकृत्फलीकृत्य चरुस्थाल्यामुदकमासिच्य सारतण्डुलान्पितृतीर्थेनोप्य

दक्षिणाग्नावाधिश्रित्यैषच्छृतमभिघार्य दक्षिणत उद्वास्याप्रदक्षिणमाहृत्य अध्वर्युर्मेक्षणेन "ॐअग्नये कव्यवाहनाय स्वाहा" इति ( य० सं० २। २९ ) जुहोति।

यजमानः-"ॐइदमग्नये कव्यवाहनाय न मम" इति त्यागं कुर्यात्।

पुनरध्वर्युः तद्दक्षिणे "ॐसोमाय पितृमते स्वाहा" ( य० सं० २। २९ ) इति जुहोति।

यजमानः-"ॐइद१ँ सोमाय पितृमते न मम०"

अध्वर्युः मेक्षणं हुतस्य वामे प्रास्यति।

ततः स्फ्येन दक्षिणाग्निमपरेण "ॐअपहता असुरा रक्षा१ँसि वेदिषदः" इति (य० सं० २। २९) दक्षिणाग्रां रेखामुल्लिखति। अथ उपस्पृश्य दक्षिणाग्रेरुल्मुकमादाय "ॐये रूपाणि प्रतिमुञ्चमाना असुराः सन्तः स्वधया चरन्ति। परापुरो निपुरो ये भरन्त्यग्निष्टाँल्लोकात्प्रणुदात्यस्मात्"—इति ( य० सं० २। ३० ) रेखाग्रे निदधाति। अथ उपस्पृश्य उदपात्रमादाय अमुकगोत्र यजमानस्य पितः अमुकशर्मन् अवनेनिक्ष्व इति पितृतीर्थेन रेखामूलेऽवनेजयति। रेखामध्ये अमुकगोत्र यजमानस्य पितामह अमुकशर्मन् अवनेनिक्ष्व इति। अथ रेखाग्रे अमुकगोत्र यजमानस्य प्रपितामह अमुकशर्मन् अवनेनिक्ष्व इति। सकृदाच्छिन्नानि रेखायां कृत्वा यथाऽवनिक्तं पिण्डान् ददाति त्रीन्। चरुं त्रेधा विभज्य पिण्डान् कृत्वैकमादाय अमुकगोत्र यजमानस्य पितः अमुकशर्मन् "एतत्तेऽस्म१ँस्वधा" इति दद्यात्।

यजमानः ॐइदम् अमुकगोत्रायाऽस्मत्पित्रे अमुकशर्मणे न मम।

पुनरध्वर्युः द्वितीयमादाय अमुकगोत्र यजमानस्य पितामह अमुकशर्मन् "एतत्तेऽन्नॐ स्वधा" इति दद्यात् ।

यजमानः-ॐइदम् अमुकगोत्रायाऽस्मत्पितामहायामुकशर्मणे न मम ।

अध्वर्युः-तृतीयमादाय अमुकगोत्र यजमानस्य प्रपितामह अमुकशर्मन् "एतत्तेऽन्नॐ स्वधा" इति दद्यात् ।

यजमानः-ॐइदम् अमुकगोत्रायास्मत्प्रपितामहायामुकशर्मणे न मम इति त्यजति ।

अध्वर्युः हस्तं प्रक्षाल्य "ॐअत्र पितरो मादयध्वं यथाभागमावृषायध्वम्" इति (य०सं०२।३१)जपति। अपसव्यमावृत्योदङ्ङास्ते आतमनात् । (आतमनात् उच्छासावसानं यावत् ) । पुनस्तथैव आवृत्य दक्षिणाभिमुखो भूत्वा "ॐअमीमदन्त पितरो यथाभागमावृषायिषत" इति (य०सं०२।३१) जपति। पिण्डमूले चोपरि पूर्ववदवनेजनम् । नीवीं विस्रंस्य षडञ्जलीन् करोति प्रतिमन्त्रम्-"ॐनमो वः पितरो रसाय" १ "ॐनमो वः पितरः शोषाय" २ "ॐनमो वः पितरो जीवाय" ३ "ॐनमो वः पितरः स्वधायै" ४ "ॐनमो वः पितरो घोराय"५ "ॐनमो वः पितरो मन्यवे नमो वः पितरः पितरो नमो वः"६ इति ( य० सं० २। ३२)। "ॐगृहान्नः पितरो दत्त सतो वः पितरो देष्म" इति ( य० सं० २ । ३२ ) जपति च । ततः "ॐएतद्वः पितरो वास" इति ( य० सं० २। ३२ ) त्रीणि त्रीणि सूत्राणि प्रतिपिण्डं ददाति । उदपात्रजलशेषम् "ॐऊर्जं वहन्तीरमृतं घृतं पयः कीलालं परिस्रुतम् ॥ स्वधा स्थ तर्पयत मे पितॄन्" इति ( य० सं० २ । ३४ )

पिण्डेषु निषिञ्चति। पिण्डानुद्धृत्य यजमानाय प्रयच्छति। स चावजिघ्रति। अध्वर्युः सकृदाच्छिन्नान्यग्नौ प्रहृत्योल्मुकं च, सव्येनापः स्पृशेत्। पत्नी पुत्रकामा चेत् तस्यै यजमानः अनवघ्रातं मध्यमपिण्डं प्रयच्छेत्। सा च करिष्यमाणपार्वणमध्यमपिण्डेन सह "ॐआधत्त पितरो गर्भं कुमारं पुष्करस्रजम्। यथेह पुरुषोऽसत्" इति (य० सं० २। ३३) मन्त्रेण प्राश्नाति। ततो दर्शश्राद्धम्।

जीवत्पितृकस्य पिण्डपितृयज्ञाभावः।

इति पिण्डपितृयज्ञप्रयोगः।

नाहं श्रौतार्थनिष्णातः श्रीगौरीनाथसंश्रयात्।
तथापि व्यलिखं किञ्चित् प्रीयतां तेन सद्गुरुः॥
चन्द्रनागाङ्कभूवर्षे भाद्रमासासिते दले।
कृष्णाष्टम्यां गतः पूर्तिं कातीयेष्टिप्रदीपकः॥

इति श्रीनित्यानन्दपर्वतीयाविरचितः कातीयेष्टिदीपकः समाप्तः।
संवत् १९८१ भाद्र कृष्ण ८ शुक्रे। शम्।

---